...astri Indol...

श्रीः

- 6 -

# अद्वैतदीपिका



## ( द्वितीयो भागः )

कलिकाता विश्वविद्यालयाध्यापक-वेदान्त-
विशारद-विद्वद्वरसुब्रह्मण्यात्मज
श्रीयुक्तानन्तकृष्णशास्त्रिणा

संपादिता प्रकाशिता च ।

१९२३

SGDF
Sri Gargeshwari Digital Foundation

THIS BOOK

IS

DEDICATED WITH

DUE RESPECT,

**to**

**his generous patron,**

**Sir Onkar Mull Jatia Kt. O. B. E,**

BY

*Pandit* Anantha Krishna Sastri.

SGDL

* श्रीगणेशाय नमः *

# अद्वैतदीपिका

## । द्वितीयो भागः ।

### ॥ जन्माद्यधिकरणम् ॥

### (१) विरुद्धस्वभावस्य स्वरूपलक्षणत्वाभावोपपत्तिः ॥

मातामहमहाशैलं महस्तदपितामहम् ॥

कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

इमान्यत्र भामतीगतानि पूर्वपक्षवाक्यानि—स्वरूपस्य प्राधान्यात्तदेवाक्षिप्य प्रथमं समर्थ्यते । तत्र यत्तावदनुभूयते तत्सर्वं परिमितमविशुद्धमबुद्धं विध्वंसि च । न तेनोपलब्धेन तद्विरुद्धस्य ब्रह्मणः स्वरूपं शक्यं लक्षयितुम् । नहि जातु कश्चित् कृतकत्वेन नित्यं लक्षयति । नच तद्धर्मेण नित्यत्वादिना तल्लक्ष्यते ; तस्यानुपलब्धचरत्वात् । प्रसिद्धं हि लक्षणं भवति, नात्यन्तमप्रसिद्धम् । एवंच शब्दोऽप्यत्र न प्रक्रमते—इति ।

अयमेषामाशयः—ब्रह्मस्वरूपावगमनार्थमपेक्षितं लक्षणं द्विविधं तटस्थलक्षणं स्वरूपलक्षणं च । यः खलु तद्धर्मः, भवति तत्तटस्थलक्षणम् । यथा पृथिव्या गंधादिकम् । यत्तु पुनस्तदभिन्नं स्वरूपं तदविरुद्धस्वभावं तत्तत्स्वरूपलक्षणमिति । तत्र चोपलभ्यमानं कार्यजातं ब्रह्मणस्तद्विरुद्धस्वभावस्य स्वरूपलक्षणं न कथमपि भवति । एतेन—तत्तटस्थलक्षणत्वमपि—व्याख्यातम् । नहि तदधर्मः कृतकत्वमिव नित्यस्य जगद् ब्रह्मणः तटस्थलक्षणतामर्हति ।

SGDL Sri Gangadharan Digital Lbrary

नित्यत्वं तु ब्रह्मधर्मतया न प्रमाणान्तरावगतमिति न तदपि तद्भावमर्हतीति ।

अत्रच विरुद्धस्वभावत्वं जगतः स्वरूपलक्षणत्वं प्रतिरुणद्धि, तद्धर्मत्वं तु तटस्थलक्षणत्वमिति निष्कर्षः सर्वविदित एव । पूर्वतनवाक्ये ब्रह्मणः स्वरूपमिति स्वरूपपदप्रयोगः, उत्तरवाक्ये "कृतकत्वेन नित्यं लक्षयती"ति स्वरूपपदाप्रयोगश्च द्विविधमपि लक्षणत्वं जगतो नास्तीति गमयति ।

अत्रस—"न तेन तद्विरुद्धस्वभावस्य ब्रह्मणः स्वरूपमि" ति वाक्येन जगतः स्वरूपलक्षणत्वनिषेधः । "नहि जातु कश्चिदि"ति वाक्येन तु तटस्थलक्षणत्वनिषेध इति तु परमो निष्कर्षः । नहि विरुद्धस्वभावत्वमेवोक्तलक्षणत्वप्रयोजकतयाऽत्र विवक्षितमिति कल्पनायां "नहि जातु कश्चिदि"ति वाक्यं संगतं भवति । नहि कृतकमिव कृतकत्वमपि नित्यविरुद्धस्वभावम्, किन्तु तद्धर्मत्व-मपि तत्प्रयोजकमित्यवश्यमूरीकरणीयम्। तश्चेदं द्विविधलक्षणत्व-निरासपरमिदं प्रकरणमित्यङ्गीकार एव विशेषतः स्वरसं भवति ।

यदत्र चन्द्रिकायाम्—"अनित्यशब्दादेर्नित्याकाशादिलक्षणत्व-दर्शनाच्चे"त्युक्तम्, तदिदं शब्दादेराकाशविरुद्धस्वभावस्यापि तत्स्व-रूपलक्षणत्वस्य केनाप्यनङ्गीकारात् विरुद्धस्वभावेन स्वरूपलक्षणं न भवतीति नियमस्य व्यभिचारप्रदर्शनपरं न भवति । एतेन—तद्धर्मस्य तत्तटस्थलक्षणत्वं न भवतीति नियमस्यापि न व्यभि-चारप्रदर्शनम् ; शब्दस्याकाशाधर्मत्वस्य सर्वैरनंगीकारादित्यनुक्तो-पालंभनमेवेदं चन्द्रिकावाक्यमिति—सूचितम् ।

SGDF
Sri Gargeshwari Digital Foundation

अनुक्तोपालम्भनमपीदं । कीदृशमुपपन्नमिति विचारणायां तु खण्डनकाराः शान्तिपादा निरूपयन्ति—"आकाशनित्यत्वस्य वेदान्तिमतेऽसिद्धेरि"ति । नहि आकाशनित्यत्वं वादिप्रतिवाद्युभयसंमतमित्युभयसंमतव्यभिचारस्थानता न शब्दाकाशयोर्भवति । यत्तु प्रकाशप्रसरे—"वाचा विरूपनित्यया" "श्रुतिर्वाव नित्ये" त्यादाविव बहुकालस्थायित्वरूपं नित्यत्वमाकाशादेरपि संभवतीति—वर्णितम्, तत्र दार्ष्टान्तिके ब्रह्मणि मुख्यनित्यत्वस्यैवाबाध्यत्वापरपर्यायस्य विवक्षायां बाधकाभावात् बाध्येनाबाध्यलक्षणस्याद्वैतमतरीत्या कुत्रापि वर्णयितुमशक्यत्वादकिंचित्करमेव । एतेन—नित्येन पृथिवीत्वेनानित्यपृथिवीलक्षणात्तत्र व्यभिचार इत्येवात्रादिपदप्रयोगाद्विवक्षितमिति प्रकाशप्रसरोक्तमपि—परास्तम् ; पृथिवीत्वनित्यत्वस्याप्यद्वैतिभिरनङ्गीकारात् । एतेन—शब्दाकाशयोः परिच्छिन्नत्वापरिच्छिन्नत्वाभ्यां गुणागुणस्वरूपत्वाभ्यां विरुद्धस्वभावत्वमपि प्रकाशप्रसरोक्तं—परास्तम् । अद्वैतमत आकाशस्येव शब्दस्यापि मीमांसकमत इवापरिच्छिन्नत्वस्यैवाङ्गीकारेण गुणत्वानङ्गीकारेण च ताभ्यामपि विरुद्धस्वभावत्वं हि बाधितमेव । एतेन—ऐन्द्रियकत्वानैन्द्रियकत्वाभ्यां विरुद्धस्वभावत्वमपि—व्याख्यातम् । वायवीयावयवविशेषा एव शब्दा इति भट्टकुमारिलपादसिद्धान्तस्य श्लोकवार्तिकस्थस्यानुसरणेन हि शब्दस्याप्यद्वैतिनो, ये खलु व्यवहारे भाट्टनयमेव समादरणीयं मन्यन्ते तेऽनैन्द्रियकत्वमेवोरीकुर्वन्तीति । नात्र बहु विलेखितुमिच्छामः। वस्तुतस्तु—नैयायिकमत इव वेदा-

न्तिमते शब्दाकाशयोर्गुणगुणिभावस्य लक्ष्यलक्षणभावस्य वाऽनङ्गीकारात् विरुद्धस्वाभावयोरपि लक्ष्यलक्षणभावासंभवस्य न शब्दाकाशयोर्व्यभिचारापादनस्य प्रसंगलेशोऽपि वर्तते। सर्वथातु भामतीस्थानि पूर्वपक्षवाक्यानि नानुपपन्नार्थानीति सिद्धम् ॥१॥

## (२) कारणत्वादेस्तटस्थलक्षणत्वोपपत्तिः ॥

इदमत्र भामतीरहस्यम्—यद्‌ यत्र स्वरूपलक्षणं विवक्ष्यते, तत्र स्वरूपपदस्यापि प्रयोगः, यत्र तटस्थलक्षणं तत्र स्वरूपपदाप्रयोग इति। एवंच "मा भूदनुभूयमानं जगद्‌ ब्रह्मणो लक्षणं तदुत्पत्त्यादि तु भविष्यती" त्यत्र स्वरूपपदाप्रयोगाज्जगतस्तटस्थलक्षणत्वनिषेधपुरस्सरं तत्कारणत्वस्यैव तल्लक्षणत्वविवक्षणमेव क्रियत इति न लक्षणपदस्यैकत्र स्वरूपलक्षणपरत्वमपरत्र तटस्थलक्षणपरत्वं चात्र स्वीकृतमिति न वैरूप्यलेशोऽप्यत्र प्रसरति। तथाच जगतो ब्रह्माधर्मस्य तटस्थलक्षणत्वाभावेऽपि तत्कारणत्वस्य ब्रह्मधर्मस्य तल्लक्षणत्वं संभवत्येवेति सिद्धान्तसारसंग्रहः। अत्रच पूर्वपक्षे जगति निषिद्धं तटस्थलक्षणत्वमेव सिद्धान्ते कारणत्वे समर्थितमिति न पूर्वोत्तरपक्षयोर्भिन्नविषयत्वमपि वर्तत इति कारणत्वं तटस्थलक्षणमेव विवक्षितं न स्वरूपलक्षणम्। तटस्थलक्षणत्वे विरुद्धस्वभावत्वं न प्रतिबन्धकमिति पूर्वमेवोक्तम्।

एतेन—जगत इव कारणत्वस्याप्यनात्मतया विरुद्धस्वभावत्वात् सिद्धान्तोऽप्ययुक्तः" इति चन्द्रिकातत्प्रकाशतत्प्रसरकारादि-

SGDF
Sri Gargeshwari Digital Foundation

दूषणं निरालम्बमिति—सूचितम् । नहि अविरुद्धस्वभावत्वं कारणत्वस्य ब्रह्मस्वरूपलक्षणताप्रयोजकमत्र विवक्षितम्, किन्तु लक्षणान्तरतोपयोगि तद्धर्मत्वम्, नतु जगतस्तद्धर्मत्वमस्तीति हि पूर्वमेव विवेचितम् । नहि विरुद्धस्वभावस्य तटस्थलक्षणत्वमपि न संभवति । तदुक्तं खण्डने—"विरुद्धस्वभावस्य स्वरूपलक्षणत्वासंभवेऽपि तटस्थलक्षणत्वसंभवादि"ति । एतेन—"अत्र पूर्वपक्षे यादृशं लक्षणत्वमाक्षिप्तं तादृशमेव हि लक्षणत्वं सिद्धान्ते कारणत्वे व्यवस्थाप्यं, नतु तटस्थलक्षणत्वम्; सकृच्छ्रुतस्य लक्षणपदस्यानेकार्थत्वकल्पनाया अन्याय्यत्वात्, अन्यथा "मा भूदनुभूयमानं जगत् तद्धर्मतया तदात्मतया वा लक्षणं किन्तु तटस्थलक्षणं भविष्यती" ति सिद्धान्तोक्तिप्रसंगात्" इति प्रकाशप्रसरोक्तमनुकोपालंभनमिति—सूचितम् ।

यदितु ब्रह्माधर्मस्य जगतोऽपि जनकतासंबंधेन पक्षसबंधमादाय तटस्थलक्षणत्वमाशंक्यते, तर्हि वृत्त्यनियामकसंबंधस्यापि हेतुतावच्छेदकता न दोषायेति मते तस्यापि तटस्थलक्षणत्वं नानिष्टमिति पश्यामः । अत एव परिमले—"यद्यपि जन्यजनकभावसंबन्धेन जगत एव लक्षणत्वं युक्तम्; तथापि व्यावृत्तिव्यवहारानुमानयोर्हेतूभवतो लक्षणस्य तन्निष्ठत्वेन भाव्यमिति ये मन्यन्तेताननुरुध्ये"ति लेखनेन हि परिमलकारा नायं नियमः प्रामाणिक इत्यपि—सूचयन्ति । यदत्र प्रकाशप्रसरे—"ये मन्यन्ते ताननुरुध्ये"ति लेखपरित्यागेन परिमलानुवादेन परमतेऽपि जगतस्तटस्थलक्षणत्वं न संभवतीत्येवोक्तमित्युक्तम्, तदिदं बालप्रमो-

हनमात्रम् । "जगतोऽपि कारणतासंबन्धेन लक्षणत्वस्येष्टत्वादि" ति वदतां खण्डनकाराणामप्येवमेवाशयः । अस्मिन्मते—पूर्वपक्षे जगतो लक्षणत्वासंभवाशङ्का तु स्वरूपलक्षणत्वमात्रविषया पर्यवस्यति । "पूर्वपक्षे जगतो लक्षणत्वासंभवाशङ्का तु स्वरूपलक्षणत्वाभिप्राये"ति वर्णयतां खण्डनकाराणामप्ययमेवाशयः । तत्र स्वरूपलक्षणत्वपदस्य तन्मात्रपरत्वात् ।

यत्तु प्रकाशप्रसरे—सकलेतरव्यावृत्तलक्ष्यस्वरूपबोधनसमर्थमिह स्वरूपलक्षणमेव निर्धारणीयं, जगज्जन्मादिकं तु न तथा ; प्रधानपुरुषादिभ्योऽव्यावर्तकत्वात् । अतस्तादृशं स्वरूपलक्षणमेव निर्दिधारयिषितं, नतु तटस्थलक्षणमेव । "अतएवाचार्यैर्वक्ष्यते— "स्वरूपलक्षणपरत्वं सूत्रस्य दर्शयितुं तस्य चेतिभाष्यमि"ति परिमलोक्तरीत्या सूत्रस्य प्रथमतः स्वरूपलक्षणपरत्वं वर्णनीयमित्यस्मद्रीत्याश्रयणेन कारणत्वस्य स्वरूपलक्षणत्वमूरीकृत्य ब्रह्मणः सगुणत्वमेव युक्तमङ्गीकर्तुमि''ति–वर्णितम्। अत्रापि प्रकाशप्रसरकारैः- "तादृशं स्वरूपमेव तटस्थलक्षणद्वारा सूत्रकृता निर्दिधारयिषितमि"ति परिमलवाक्ये "तटस्थलक्षणद्वारे"ति पदं परित्यक्तमनुवादावसरे इति यथाश्रुतपरिमलेन प्रथमतस्तटस्थलक्षणमनन्तरं स्वरूपलक्षणमित्यस्यैवार्थस्य बोधनात् परिमलोक्तरीत्या प्रथमतः स्वरूपलक्षणपरत्वमंगीकरणीयमित्युपन्यासो बालप्रलोभनमेव ।

वस्तुतस्तु—न कारणत्वं स्वरूपलक्षणं भवितुमर्हति । तथाहि—किमत्र प्रमाणान्तरसिद्धं कारणत्वं स्वरूपलक्षणतया विवक्षितमुत "यतो वे" तिवाक्यसिद्धमेव । आद्ये विष्णुतत्त्वरहस्ये

भवदीये आनुमानिकेश्वरकारणवादनिरासानुपपत्तिः, प्रधानाद्यव्यावृत्तिश्च। द्वितीयेतु "यतो वे"तिवाक्ये कारणत्वं सकलेतरव्यावृत्तलक्ष्यस्वरूपबोधनं च कर्तव्यमिति वाक्यभेदः। अस्मन्मते तु "यतो वे"तिवाक्यस्यावान्तरवाक्यत्वात् "आनन्दाद्ध्येवे"ति वाक्येनैव सकलेतरव्यावृत्तत्वस्य स्वरूपे बोधनादवाक्यभेदः सर्वविदित एव। एतदभिप्रायेणैव भामत्यां पूर्वपक्षोपसंहारे—"प्रसिद्धं हि लक्षणं भवति, नात्यन्तमप्रसिद्धम्। एवंच शब्दोऽप्यत्र न प्रक्रमते" इति निरूपितम्। तथाच केनापि रूपेण ब्रह्मप्रसिद्धिसंपादनद्वाराऽऽनन्दादिस्वरूपबोधनं संपूर्णायां भृगुवल्ल्यामेव भवतीति सर्वाऽपि भृगुवल्ली जन्मादिसूत्रविषय इति ब्रह्मतटस्थलक्षणखण्डनतावादः कथमपि न सेत्स्यति। तदुक्तं परिमले—"स्वरूपलक्षणमपि "यतो वेति" वाक्यमूलम्। तदुक्तं जगत्कारणमनूद्य हि तस्यानन्दविधायकमानन्दवाक्यमि"ति। अनेनहि वाक्येनेदमवगम्यते यत् कारणस्यानूद्यमानत्वेनातात्पर्यविषयत्वमिति व्यावहारिकत्वमेव तस्याङ्गीकरणीयमिति कारणत्वस्वरूपलक्षणताऽस्य न संभवतीति। यत्तु प्रकाशप्रसरे—"यतो वे" ति वाक्यं ब्रह्म लक्षयति उत नेति कल्पतरुव्याख्याऽवसरे परिमले "आनन्दाद्ध्येवे"ति स्वरूपलक्षणपरं "यतो वेति वाक्यं तटस्थलक्षणपरमित्युक्तमित्युक्तम्, तत्रापि परिमले सूत्रेण तटस्थलक्षणमेवेत्येवकारप्रयोगात्, स्वरूपलक्षणमपि "यतोवे"तिवाक्यमूलमिति वर्णनाच्च न यथावत्परिमलानुवादः शब्दतोऽर्थतो वेति कति वा प्रतारणानि प्रकाशप्रसरकाराणामिति न वयं वक्तुं पारयामः।

पूर्वपक्षे जगतस्तटस्थलक्षणत्वमेकेन मतेन निषिद्धम्, सिद्धान्तेतु मतान्तरेणाङ्गीकृतमिति न कोऽपि दोषः। एतेन—जगति निषिद्धं लक्षणत्वं तटस्थलक्षणत्वमेवेति पुनस्तदङ्गीकारेऽपसिद्धान्त इति प्रकाशप्रसरोक्तमनुक्तोपालंभनमिति = सूचितम्। नहि वयं कारणत्वस्य तटस्थलक्षणत्वमेव सिद्धमिति कारणेन पूर्वपक्षे जगतस्तटस्थलक्षणत्वमेव निषिद्धं वदामः। नहि तटस्थलक्षणत्वस्य पूर्वपक्षेऽनिषेधे—"नहि जातु कश्चित् कृतकत्वेन नित्यं लक्षयति" इति वाक्यं सफलं भवेदिति हि पूर्वमेव विवेचितम्। तथाच जगतः पूर्वपक्षे उभयविधमपि लक्षणत्वं निषिद्धं चेदपि "मा भूदनुभूयमानमि" ति वाक्ये तटस्थलक्षणत्वनिषेधमात्रस्यानुवाद एव क्रियते। यतः सिद्धान्ते कारणत्वस्य तटस्थलक्षणत्वमेवाभिसंहितमिति न सकृच्छ्रुतस्य लक्षणपदस्यानेकार्थकल्पनादोषोऽपि भामतीमते भवति। यथाच कारणत्वं न ब्रह्मणोऽसाधारणो धर्मः मुख्यतात्पर्यविषयत्वाभावात् तथा पूर्वमेव विवेचितमिति तत्तटस्थलक्षणत्वमुपपन्नमेव। एतेन—कारणत्वस्य तदात्मतया लक्षणत्वाभावात्तद्धर्मतया लक्षणत्वं वक्तव्यम्। ततश्च तन्निष्ठासाधारणधर्मस्य तत्तटस्थलक्षणत्वकथनमनुचितमेवेति प्रकाशप्रसरोक्तम्—अपास्तम्।

वस्तुतस्तु—"मा भूदनुभूयमानं जगत्तद्धर्मतया तदात्मतया वा ब्रह्मणो लक्षणमि" ति वाक्ये तटस्थलक्षणत्वस्य स्वरूपलक्षणत्वस्य चोभयस्य निषेधो वर्तते। नहि तटस्थलक्षणगतं स्वरूपलक्षणगतं च लक्षणत्वं विभिन्नमिति "जगदुत्पत्त्यादि तु भविष्यती" त्य

SGDF

त्र यथासंभवं लक्षणपदार्थविवक्षा नानुपपन्ना। प्रकाशप्रसरकारा अपि—"कारणत्वस्य तदात्मतया लक्षणत्वासंभवात्तद्धर्मतयैव लक्षणत्वं वक्तव्यमि"ति वदन्तः पूर्वतनवाक्य।त्तदात्मतयेत्यस्योत्तर-वाक्यसम्बन्धं नानुमन्यन्ते इति तदात्मतया लक्षणत्वस्यैव स्व-रूपलक्षणत्वात्, तद्धर्मतया लक्षणत्वस्यैव तटस्थलक्षणत्वाच्च न लक्षणपदस्यानेकार्थताप्रसङ्गः। यत्तूक्तं "सकृच्छ्रुतस्ये"ति,तदिदं पूर्वतनवाक्यगतस्यैव लक्षणपदस्य विनाऽऽवृत्तिं वाक्यान्तरेऽन्व-यासंभवात् सकृच्छ्रवणाभावाच्चासंभवदुक्तिकमेव। सर्वथा च का-रणत्वं जगद् वा तटस्थलक्षणमिति भामतीसिद्धान्तो न कथम-प्यनुपपन्न इति सिद्धम् ॥२॥

## ॥ स्वरूपलक्षणेन निर्विशेषब्रह्मसिद्धिः ॥

जगत्कारणत्वं च यतस्तत्टस्थलक्षणमिति निरूपितं तेनेदमपि सिद्धम्—यत् तत् तत्र वस्तुगत्या न भवतीति तल्लक्षितस्य ब्रह्मणः स्वरूपलक्षणेन निर्विशेषत्वसिद्धिरपि नानुपपन्ना। यत्तु चन्द्रि-कायां—जिज्ञास्यत्वेनाद्यसूत्रोक्तस्य निर्विशेषस्य जगद्भ्रमाधिष्ठा-नत्वेऽपि कारणत्वासंभव इति—वर्णितम्, तदिदं "कारणत्वं च जीवाविद्याविषयीकृतस्य ब्रह्मणो धर्मः" इति कल्पतरुवाक्येन जग-द्भ्रमाधिष्ठानत्वस्यैव कारणरूपत्ववर्णनात् कारणत्वेऽपि कारण-त्वासंभव इत्युपन्याससदृशमेवेति न कथमप्युपपन्नम्। वस्तुतस्तु-कारणत्वं तटस्थलक्षणमिति भामतीसिद्धान्ते वस्तुगत्या निर्विशेष-स्य कारणत्वस्यानभिमतत्वात् कारणत्वासंभवापत्तिरियमिष्टा-पत्तिरेव।

SGDF
Sri Gurgeshwar Digital Forum

अयं भावः—कारणत्वासंभव इत्यनेन पारमार्थिककारणत्वासंभव आपाद्यते, कल्पितकारणत्वासंभवो वा। द्वितीये जगद्भ्रमाधिष्ठाने कारणत्वस्यापि कल्पनासंभवात् न कारणत्वासंभवः। तदुक्तं वार्तिके—"अक्षमा भवतः केयं साधकत्वप्रकल्पने। किं न पश्यसि संसारं तत्रैवाज्ञानकल्पितमि" ति। द्वितीये त्विष्टापत्तिः। नहि पारमार्थिककारणत्वानङ्गीकारे काऽपि क्षतिरद्वैतिनां संभवति।

परमार्थतस्तु—भामतीमते उपहितस्यैव शास्त्रवेद्यत्वं नतु शुद्धस्येति पूर्वाधिकरण एव प्रतिपादितत्वात् जिज्ञास्यत्वेनाद्यसूत्रे प्रकृतस्य निर्विशेषस्येत्यनुवादो भामतीसिद्धान्तानवबोधविजृम्भित एवेति तस्य जगद्भ्रमाधिष्ठानस्य कारणत्वं समसत्ताकमपि संभवत्येवेति न विरोधः। एतेन—न्यायामृतोक्तरीत्याऽधिष्ठानत्वमपि तस्य न संभवत्येवेति प्रकाशप्रसरोक्तम्—अपास्तम्। सिद्ध्याद्दौ व्यवस्थापनात्। एतेन विवरणसिद्धान्तोऽपि—व्याख्यातः। तत्रापि हि निर्गुणमिव सगुणमप्युपास्यतया विचारणीयमेवोत्तरमीमांसायामिति तत्र कारणत्वं संभवत्येव। अस्मन्मते हि सगुणं ब्रह्मैव गुणपरित्यागेन निर्गुणं भवतीति कारणत्वतटस्थलक्षणता वस्तुगत्या पर्यवस्यति। एतेन—तत्राविद्यमानलक्षणकथनपरस्य सूत्रस्याप्रामाण्यं स्यादिति प्रकाशप्रसरोक्तम्—परास्तम्। नहि जन्मादिसूत्रं तटस्थलक्षणमात्रपरम्,किन्तु तद्द्वारा स्वरूपलक्षणपरमपीति परिमलानुसारेण पूर्वमेव विवेचितम्। तथाच तटस्थलक्षणेऽवान्तरतात्पर्यस्यैवाङ्गीकारात् पर्यवसितप्रामाण्यासंभवो यद्या-

SGDF

पाद्यते, तर्हीष्टापत्तिः, स्वरूपलक्षणवाक्यस्यैव तदभिमतत्वात्। तदवबोधादनन्तरमेव तटस्थलक्षणत्वनिर्णयः। नहि प्रथमतोऽवगतस्य स्वतःप्रमात्वस्य बाधः। स्वतोग्राह्यं प्रमात्वं भ्रमादिसाधारणमेव। अतएव भ्रमादपि प्रवृत्त्युपपत्तिरिति हि न्यायरत्नावल्यां व्यक्तम्। तथाच बाधज्ञानानन्तरमेव भ्रमत्वनिश्चयेऽपि यथा पूर्वमवगतप्रमाणत्वबाधो न दोषाय, एवमत्रापि ब्रह्मनिष्ठतयैव कारणताऽवगमेऽपि पाश्चात्त्येन स्वरूपलक्षणवाक्येन तद्बाधात्तटस्थलक्षणत्वपर्यवसानमिति न विरोधः

एतेन—तटस्थत्वं नाम ब्रह्माश्रितमायागतत्वं नतु ब्रह्मगतत्वम्, तथाच यतोऽस्य जन्मादि सा माया, तदाश्रयो ब्रह्मेति सूत्रनिर्देशः स्यात्, नतु "जन्माद्यस्य यतः" इति, तथा श्रुतौ तत् ब्रह्मेति तत्पदमपि लक्षणया तदाश्रयं ब्रह्मेत्यर्थपरं स्यात्। नचैतद्युक्तम्; मुख्यार्थसंभवे लक्षणाश्रयणस्यायुक्तत्वात्। नच ब्रह्मणो जगत्कारणत्वस्य बाधकं प्रत्यक्षादि; तस्य श्रुतिबाधितत्वात् इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्; स्वरूपलक्षणेन कारणत्वादिबाधोत्तरमेव तटस्थलक्षणत्वस्याङ्गीकारेणोक्तदोषाभावात्। यथाच ब्रह्मवल्ल्या भृगुवल्ल्याश्च कारणत्वादिमिथ्यात्वेन ब्रह्मसत्यत्वे एव तात्पर्यं तथाऽऽनन्दमयाधिकरणे निरूपयिष्यते। नहि कारणत्व इव ब्रह्मण्यपि बाधकं किमपि प्रमाणं वर्तत इति न शून्यवादापत्तिः। यत्तु प्रकाशप्रसरे—कारणत्वस्य तटस्थत्वेन मिथ्यात्वे ब्रह्मसत्वादेरपि मिथ्यात्वापात इति—वर्णितम्, तत्र सत्त्वस्य ब्रह्मधर्मस्य मिथ्यात्वमद्वैत्यभिमतमेवेति न दोषः। एतेनेदं सिद्धं भवति—यत्

कारणत्वं निर्विशेषस्यैव तटस्थलक्षणम्,भामतीमतरीत्या वृत्त्युपहितब्रह्मण एव,वेति । एतेन—इदं कारणत्वं विशिष्टस्य तटस्थलक्षणमुत निर्विशेषस्येति शंका तत्समाधानं चानवसरमनुपपन्नं चेति सूचितम् ॥तत्र हि प्रथमपक्षोऽनङ्गीकारपराहतः,द्वितीयस्त्विष्टापत्तिपराहतः । यत्तु प्रकाशप्रसरे—त्वदभिमतनिर्विशेषस्यास्मदभिमतविशिष्टातिरिक्तस्याप्यसिद्धेरिति—वर्णितम्, तत्रात्ववादिसिद्धान्तेऽपि कारणत्वं जीवाविद्याविषयत्वरूपमधिष्ठानत्वम्, तच्च मिथ्यैवेत्याद्यद्वैतसिद्धान्तो यदि संमतः, तर्ह्यपसिद्धान्तः । यदि न संमतः, तर्हि तु भवदभिमतसविशेषातिरिक्तत्वमेवेति कथं भवदभिमतसविशेषानतिरिक्तत्वमिति भवन्त एव विवेचयन्तु । अधिकमानन्दमयाधिकरणे व्यक्तम् ।

एतेन—सगुणस्याप्युपहितब्रह्मणो जिज्ञास्यत्वावगमेन तत्र कारणत्वसंभवात् रामानन्दीय उक्तभाष्यस्य जिज्ञास्यब्रह्मणः सगुणनिर्गुणपरतया व्याख्यानं दृश्यते इति खण्डनोक्तमपि—व्याख्यातम् । यथाच निर्गुणं ब्रह्मैव शास्त्रतात्पर्यविषयः तस्य ज्ञानस्वरूपस्याप्यज्ञानविषयत्वविशिष्टज्ञानाविषयत्वादिकं फलाव्याप्यस्यापि वृत्तिविषयत्वमात्रसंभवश्च, तथा पूर्वमेव विवेचितम् ।

एतेन—सगुणस्यैव शास्त्रतात्पर्यविषयत्वं शुद्धस्याज्ञानविषयत्वजिज्ञास्यत्वाद्यसंभवः फलव्याप्यत्वापत्तिरिति—प्रकाशप्रसरोक्तं ग्रन्थविस्तरमात्रं विकल्पासहमप्रयोजकमकिंचित्करंचेति—सूचितम् ।

यथाच निर्गुणत्वस्य गुणाभावरूपस्य ब्रह्मरूपत्वेनाद्वैत-

SGDF

ह्यन्यभावस्तथा पूर्वाधिकरण एव सूचितम् । एतेन—निर्गुणवाक्यस्यापि पूर्वोक्तगुणवाक्यानुसारेण निर्गुणत्वस्य भावाभावाभ्यां व्याघातेन कपिंजलाधिकरणन्यायेन हेयत्रिगुणनिषेधपरत्वेऽपि अनन्तसुगुणस्तोमनिषेधपरत्वासंभवादिति प्रकाशप्रसरोक्तम्—अपास्तम् । यथाचापच्छेदन्यायानुसारेण निर्गुणवाक्यस्यैव प्राबल्यं तथाऽद्वैतसिध्यादिषु व्यवस्थापितमिति सगुणवाक्यस्य निर्गुणबाधकत्वासंभवात् कपिंजलाधिकरणमपि नात्र प्रवर्तते । तद्धि वैधं बहुत्वं त्रित्व एव पर्यवस्यतीति गमयति । नहि निर्गुणवाक्ये बहुत्वविशिष्टगुणानां विधेयत्वम्, किन्तु प्रमाणान्तरप्राप्तानां निषेध एवेति सगुणवाक्यैः प्राप्तानां सर्वेषां गुणानां निषेध एवोरीकरणीयः । विधिष्वपि हि बहुत्वं "उत्तरा दोहयति" इत्यत्र न त्रित्वपर्यवसायीति उत्तरगोदोहनाधिकरणे व्यवस्थापितमिति निर्गुणवाक्यानां कथं गुणत्रयप्रतिषेधपरत्वम् ?

वस्तुतस्तु निर्गुणवाक्येन हेयगुणराहित्यं गुणत्रयनिषेधपरत्वं वा ये वर्णयन्ति, कथं तेषां नाप्रसक्तप्रतिषेधः ? नहि गुणत्रयप्रापकं प्रमाणं किमपि वर्तते, भ्रान्तिप्रसक्तिर्हि गुणत्रयमात्र इति नियन्तुं न कोऽपि पारयति ।

वस्तुतस्तु—निर्विशेषस्य कारणत्वासंभव इति चन्द्रिकासमर्थनार्थमिह निर्विशेषस्यैवासंभव इत्याद्युपन्यासोऽनपेक्षित एव । नहि चन्द्रिकाकारा इह निर्विशेषमेवाप्रामणिकमिति मन्यन्ते । अद्वैतमतरीत्या खलु तेऽद्वैतमतं खण्डयितुं प्रवर्तन्ते न स्वमतरीत्या । तथाच निर्विशेषाप्रामाणिकताद्युपन्यासः सवि-

SGDF Sri Gangeshwari Digital Foundation

शेषज्ञानस्य निर्विशेषज्ञानार्थत्वनिरासश्च प्रकृताभुपयुक्त एव। खण्डनकारास्तूपहितमपि जिज्ञास्यमित्यस्मत्सिद्धान्तात् तत्रच कारणत्वसंभवादस्मन्मतहानिर्नात्र संभवतीत्येव विवेचयन्ति। अत्रच प्रकाशप्रसरकारै रिदमद्वैत्यसंमतमिति खलु निरूपणीयम्, नतु अद्वैतमतखण्डनम्। नचास्यात्रावसरः। नचेदमद्वैतमतं न भवतीति साधयितुमीशते। यथाच सविशेषसाक्षात्कारार्थत्वं तदिदमन्तरधिकरणे समर्थयिष्यते। एतेन—सगुणनिर्गुणवादः सविशेषज्ञास्य निर्विशेषज्ञानार्थत्वानुपपत्त्याद्युपन्यासश्च महताऽडम्बरेण प्रकाशप्रसरसंपादितोऽकाण्डताण्डवमेवेति न वयमप्रसक्तेऽनवसरे चात्र लेखनीं व्यापारयितुमिच्छामः॥३॥



SGDF
Sri Gargeshwari Digital Foundation

## [४] लिङ्गलक्षणयोरैक्यम् ।

यत्तु खण्डने—लिंगत्वस्यापि लक्षणत्वव्याप्यत्वेन तेन तत्सिद्धेर्निष्प्रत्यूहत्वादित्युक्तं, तदप्युपपन्नमेव । धूमोऽपि हि व्यापकतासंबंधेनेतरव्यावृत्तवन्हिलक्षणमेव । व्याप्यतावच्छेदकसंबंधश्चात्र संयोगो विवक्षित इति द्रव्यत्वादौ व्यभिचारो न प्रकाशप्रसरापादितोऽत्र प्रसरेत् । स्वकारणतासमानाधिकरणव्यापकतासम्बन्धविवक्षाशंका तत्समाधानादिकं सर्वं त्वनुक्तोपालंभनमेवेति विस्तरभयादुपरम्यते ॥४॥

## (५) तटस्थलक्षणलक्षणाद्युपपत्तिः ॥

चन्द्रिकाकाराः—यदुक्तं परैर्जन्मादिकारणत्वं तटस्थलक्षणमिति, तत्र न तावत् कारणगतत्वं तटस्थलक्षणत्वम्; कारणत्वस्य ब्रह्मणि सत्त्वेन तत्तटस्थलक्षणत्वासंभवात् । एतेन—असत्यत्वं तटस्थलक्षणत्वमित्यपि--प्रत्युक्तम्; काकादेरध्यासतटस्थलक्षणस्य च गृहादावकल्पितत्वादिति प्रथममतिव्याप्तिं द्वितीयलक्षणस्य निरूप्य वस्तुगत्योक्तस्य द्वितीयलक्षणस्यासंभव एवेति विवेचयितुं— "ननु कारणताऽपि विशिष्टे न शुद्धे इति चेन्न; शुद्धे सतोऽसंभवादिप्रसङ्गेन तल्लक्षणत्वायोगादिति—वर्णयन्ति । अत्र "ननु" इति ग्रन्थेन लक्ष्यगतत्वरूपप्रथमलक्षणस्यैव स्वरूपलक्षणत्वापत्तिवारणं क्रियेत इत्येव यद्यपि प्रतिभाति, तथापि "एतेन सत्यासत्ये स्वरूपतटस्थलक्षणे इति निरस्तमिति वाक्यानन्तरं प्रवृत्तस्यास्य द्वितीयलक्षणदोषवर्णनेऽपि तात्पर्यमवश्यमूरीकरणीयम् । तथाच

SGDF Sri Gargeshwari Digital Foundation

प्रथमलक्षणस्यातिव्याप्तिं प्रथमुपाद्य"नन्वि"त्यादिना प्रथमद्वितीय-लक्षणयोरसंभव उपपाद्यत इत्येव चन्द्रिकाशय इति सिद्धम्। एवंच अतात्त्विकस्य कारणत्वस्य तटस्थलक्षणत्वासंभव इति चन्द्रिकाशयः सर्वविदित एव। एतेन—"यत्तु अतात्विकस्य कारणत्वस्य तात्त्विकब्रह्मलक्षणत्वायोग इति चन्द्रिकोक्तमि"ति चन्द्रिकाखण्डनकाराणामनुवादोऽपि--व्याख्यातः।

यत्तु प्रकाशप्रसरे—तदपि मोहमूलं विप्रलंभमूलं वा; चन्द्रिकायामुदाहृतवचनस्यैवासंभवादिति—वर्णितम्। तदिदं कस्य मोहं विप्रलंभकत्वं वा गमयतीति ते एव विवेचयन्तु। यद्यप्युदाहृत वचनं चन्द्रिकायां नास्ति; एवमपि तदर्थतात्पर्यकं वचनं वर्तत एव। अयमेवचाशयश्चन्द्रिकावचनस्येति प्रकाशकारा अप्यनुमन्यन्त एव। तदुक्तं प्रकाशप्रसरे—अस्तुवा तत्; तथाप्यतात्त्विकस्य मिथ्याभूतस्य लक्ष्यावृत्तेर्धर्मस्य तात्त्विके ब्रह्मण्यविद्यमानत्वेनासंभवादिदुष्टतया तल्लक्षणत्वानुपपत्तिरेवेति। उक्तं हि वाक्यं प्रकाशप्रसरकाराणां शुद्धेऽसतोऽसंभवादिप्रसंगेन तल्लक्षणत्वायोगादि"ति चन्द्रिकाविवरणरूपमेवेति सर्वविदितमिदम्। तथाचातात्त्विककारणत्वस्य लक्षणत्वासंभवश्चन्द्रिकोक्त एवेति सिद्धम्।

अत्रेदं विचारणीयम—कथं तस्य तटस्थलक्षणत्वाभावः प्रतिपादित इति। तत्र हि चन्द्रिकायां "नच लक्षणत्वस्यैवाभावे तद्विशेषतटस्थलक्षणत्वं युक्तमि"ति स्वाशयः सम्यगेवाविष्कृतः। तथाच लक्ष्यागतत्वमेव तत्प्रयोजकमिति सिद्धम्।

SGDF
Sri Gargeshwari Digital Foundation

अत्रचातात्त्विकस्यापि कल्पितः संबंधो ब्रह्मणा साकं वर्तते एवेति लक्ष्यागतत्वमेवासिद्धम्। प्रथमलक्षणेऽपि पारमार्थिकासम्बन्ध एव विवक्षित इति न काऽपि हानिः। अतात्त्विकसंबन्धस्यापि तात्त्विकलक्षणत्वं हि बहुषु स्थलेषु दृष्टम्। यथाच शाखाग्र-स्थूलतारादीनां चन्द्रारुन्धत्यादिलक्षणत्वे। शाखाग्रं चन्द्र इति वाक्यं हि चन्द्रतटस्थलक्षणपरमेव; चन्द्रमेवाजानतः पुरुषानुद्दिश्य प्रथमं शाखाग्रस्यैव दूरस्थस्य चन्द्रत्वेन बोधनात्। स्थूलतारा-मेव हि प्रथमतोऽरुन्धतीं सूक्ष्मायाः प्रथमतो गृहीतुमशक्यत्वात् सूक्ष्मताराऽत्वेनावबोधयन्ति वैदिकाः विवाहादिषु, नतु प्रथमतः चन्द्रव्यक्तिं सूक्ष्मतारां वा प्रदर्श्यानन्तरं शाखाग्रं चन्द्रः स्थूलतारा-ऽरुन्धती वेति, वैयर्थ्यात्। एतेन—शाखाग्रे स्थूलतारादिकं तु न चन्द्रारुन्धत्यादिलक्षणत्वेनोच्यते, किन्तु चन्द्रादिव्यक्तिं प्रदर्श्य चन्द्र इत्यादि वक्तुमिति चन्द्रिकोक्तिः—परास्ता ;

अस्तु वा शाखाग्रवाक्यं चन्द्रं प्रदर्श्य चन्द्र इति वक्तुमेव प्रवृत्त-मिति, एवमपि न हानिः; प्रकृतेऽपि निर्गुणं ब्रह्म प्रदर्श्य तदुपलक्ष-णतयैव जगत्कारणत्वोक्तिरिति संभवात्। "भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मे"ति खलूपक्रम्य "यतो वे"ति वाक्यं प्रवृत्तम्, नतु ब्रह्मानुपक्रमेण। शिष्यस्य च ब्रह्मविषयकः प्रश्नः तस्य मानान्तरेण सामान्यतः ज्ञातत्वं विना नोपपद्यते इति ब्रह्मवल्ल्या निर्गुणं स्वरूपं बोधितमपि न सम्यगधि-गतमित्येव वर्णनीयम्। अन्यथा कारणत्वस्यैव स्वरूपलक्षणत्वे विवक्षिते ब्रह्मवल्ल्यामपि तद्बोधनात् भृगुवल्ली सर्वाऽपि व्यर्था स्य-



SGDF
Sri Gargeshwari Digital Foundation

दिति चन्द्रव्यक्तिं प्रदर्श्याऽनन्तरमेव स चन्द्र इति बोधयितुमेव शाखाग्रचन्द्रवाक्यमिति मतेनाऽपि कारणत्वतटस्थलक्षणतैव पर्यवस्यति। अन्यथा—अधीहि भगवो ब्रह्मे"ति प्रश्नस्यैवानुत्थितेरिति सिद्धम्।

एतेन—"प्रकृते तु न तथा, शब्दैकगम्यस्य शुद्धरूपस्य मानान्तरायोग्यत्वादि"ति चन्द्रिकोक्तिः तस्या एव शब्दान्तरेणानुवादरूपा—"यतः शाखाग्रस्थूलताराादिकं न चन्द्रारुन्धत्यादिलक्षणत्वेनोच्यते; किन्तु चन्द्रादिव्यक्तिंप्रदर्श्य स चन्द्र इति वक्तुम्,प्रकृतेतु तद्ब्रह्मेति वक्तुं यतो वेत्यनेन कारणत्वमुच्यते नतु लक्षणत्वेनेतिवक्तुं नहि शक्यमि"ति प्रकाशप्रसरोक्तिश्च—परास्ता। यदि हि तद् ब्रह्मेति वक्तुं "य तोवेत्य"नेन कारणत्वमत्रोच्यते,तर्हि किमर्थं वा श्रुतावेव तत् ब्रह्मेति वाक्यशेष इति भवन्त एव विवेचयन्तु। यत्तु अस्मदीये,भाष्ये—किंलक्षणकं तत् ब्रह्मेति वाक्यं तत्र लक्षणपदप्रयोगः "शाखादीनामपि लक्षणत्वमेवेत्यभिप्रायेणैव। यथाच तत्रापि लक्षणत्वमेवोरीकरणीयं तथा पूर्वमेवोपपादितम्। मतान्तरेतु लक्षणपदस्याज्ञातज्ञापकपरतयोपपत्तिःसंभवतीतिनास्मदीयभाष्यविरोधः कोऽपि। एतेन—"किंलक्षणकं पुनस्तत् ब्रह्मे"ति त्वदीयभाष्ये लक्षणत्वोक्तिविरोधादिति चन्द्रिकाप्रकाशवाक्यं तस्यैव स्ववाक्यवत् प्रकाशप्रसरानुवादश्च—परास्तः। यत्तु—प्रकाशप्रसरे—किंच तस्य शुद्धस्य बोधनमपि चन्द्रादेरिव प्रत्यक्षेणोत शब्देन, नाद्यः, शब्दैकगम्यशुद्धस्वरूपस्य मानान्तरागम्यत्वात्, द्वितीयेऽपि "यतोवे"त्यादिशब्देन शुद्धब्रह्मबोधनं कृत्वा तत् ब्रह्मे-

SGDF Sri Gargeshwari Digital Founda

ति वक्तुं कारणत्वमत्रोच्यते, उत वाक्यान्तरेण ; आद्ये "यतो वे" त्यादिशब्दसमुदायेन तद्बोधः, उत यत इत्यनेनैवेत्यादि वर्णितम् तत्र न नूतनं किमपि वर्तते। यतस्तान्येव वाक्यानि चन्द्रिकाप्रकाशादिषूपलभ्यन्ते। ब्रह्मवल्लीसिद्धस्यैवावबोधनार्थमत्र कारणत्वोक्तिरित्यस्मदीयसिद्धान्तात् शब्दैकगम्यत्वादिसिद्धान्तो न विरुद्धः। न ह्यस्माभिरपि यतोवेत्यनेनैव शुद्धमपि बोध्यत इत्यङ्गीक्रियते।

एतेन—नच "यतोवे" तिवाक्यमेवाभिधया कारणत्वमुपस्थाप्य तन्मुखेन लक्षणया कारत्वरहितमानन्दैकरसं ब्रह्मोपस्थापयतीति युक्तम्, सकृत्प्रयुक्ते वृत्तिद्वयायोगात्, एतेन–"यतोवे" त्यनेनैव पदेन शुद्धप्रतीतिरिति–निरस्तम्। शुद्धरूपस्य तेनैव सिद्धत्वेन शेषवैयर्थ्यात्" इत्यादिचन्द्रिकावाक्यं तद्विवरणपरप्रकाशवाक्यानि केवलं तदनुवादरूपप्रकाशप्रसरोक्तिश्च—परास्ता; अनुक्तोपालंभनत्वात्। यथाच प्रथमतः चन्द्रेप्रदर्शितेऽपि तदधिगमविशेषार्थं शाखाग्रवाक्यं भवतां सफलमेवमस्माकमपि सत्यज्ञानादिवाक्यावगतशुद्धबोधनार्थमेव कारणवाक्यमपिसफलम्। एतेन—"सत्यज्ञानादिवाक्येन शुद्धसिद्धौ कारणवाक्यवैफल्यात्" इति चन्द्रिकोक्तिःप्रकाशप्रसरश्च–परास्तः।एतेन–नहि प्रकृष्टप्रकाशश्चन्द्र इत्युक्त्वा शाखाग्रमपि दर्शयति। नवा प्रकृष्टप्रकाशत्वादिज्ञानानुपायमन्यदेवोक्त्वाप्रकृष्टप्रकाश इति वदन्ति। नच जगत्कारणं ब्रह्मेत्युक्त्वा "आनन्दो ब्रह्मे" ति वक्तुमशक्यम्। जन्महेतुत्वेनेवोपलक्षणेनोपलक्ष्यज्ञानसिद्धेः स्थितिहेतुत्वाद्युपलक्षणान्तरवैयर्थ्यं

SGDF Sri Gurgeshwari Digital Foundation

च । अस्मन्मते तु जन्महेतुत्वमिव स्थितिहेतुत्वमपि मुमुक्षुणा श्रेयमऽनन्यत्वज्ञानायापेक्षणीयम् । तस्मात् ब्रह्मशब्दार्थगुणपूर्ति-स्वरूपलक्षणोपपादकं—"शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः" । इत्यादिवचनसि-द्धम्"यतो" "येन" त्यादिकारकविभक्तिपंचम्याद्युक्तजगज्जन्मादि सामर्थ्यमपि परमानन्दादिवद्यावल्लक्ष्यभाविस्वरूपलक्षणमेवेत्यादि प्रकाशप्रसरवाक्यानि केवलचन्द्रिकानुवादरूपाणि—परास्तानि ।

ब्रह्मवल्ल्यां हि सत्यज्ञानादिस्वरूपलक्षणानन्तरं तत्पदार्थस्य ब्रह्मणो जीवात्माभेदोऽपि प्रतिपादित इत्यकारणजीवाभेदः ब्रह्मणः कथं संभवतीति शङ्कयैव हि भृगुवल्ल्या उपक्रमः । यथाच नात्रान्न-मयादिशब्दानां भवदभिमतार्थपरत्वसंभवस्तथा आनन्दमयादिकरणे स्थापयिष्यते । तथाच प्रत्यगभिन्नवाक्यार्थलक्षणार्थमेव भृगुवल्ल्याः प्रवृत्तत्वात् सत्यज्ञानादिवाक्यस्य च तत्पदार्थस्वरूपलक्षणपरत्वा-त् नात्र स्वरूपलक्षणानन्तरं तटस्थलक्षणवाक्यं प्रवृत्तम् । एतेन—नहि प्रकृष्टप्रकाशश्चन्द्र इत्युक्त्वा शाखाग्रमपि दर्शयतीति च-न्द्रिका—परास्ता । नहि सत्यज्ञानानन्दरूपब्रह्माभेदोऽन्नमयादि-मुखेनावबोधितोऽन्नादीनामपि कारणत्वरूपणं विनोपपद्यत इति वाक्यार्थस्वरूपावगमार्थं जीवाभिन्नब्रह्मकारणतावगमोऽप्यपेक्षित एव । एतेन—नवा प्रकृष्टप्रकाशत्वादिज्ञानानुपायमन्यदेवोक्त्वा प्रकृष्टप्रकाश इति वदन्ति, नच जगत्कारणं ब्रह्मेत्यनुक्त्वाऽऽनन्दो ब्रह्मेति वक्तुमशक्यमिति चन्द्रिकोक्तिः—परास्ता । एवंच जन्मसूत्रं कारणत्वद्वाराऽऽनन्दादिस्वरूपलक्षणपरमिति भामतीवाक्यं न

SGDF
Sri Gangeshwari Digital Foundation

कथमप्यनुपपन्नम्। यथाच ब्रह्मत्रयशङ्कानिरासार्थं स्थितिहेतुत्वादिवर्णनमपेक्षितं तथा न्यायरत्नावल्यां विवेचितम्।

अत्र सर्वत्र प्रकाशप्रसरकारैश्चन्द्रिकानामानुल्लेखेन क्वचित् तत्प्रकाशनामानुल्लेखेनच चन्द्रिकाकारादिवाक्यान्येवानूदितानीति "चन्द्रिका परास्ते" ति वर्णनेन प्रकाशप्रसरनिरासोऽर्थसिद्ध एवेति मन्तव्यम्।

एतेन—जन्महेतुत्वेनैवोपलक्षणेनोपलक्ष्यज्ञानसिद्धेः स्थितिहेतुत्वाद्युपलक्षणवैयर्थ्यमिति चन्द्रिकोक्तिः—परास्ता। सर्वथाच शाखाग्रादिवाक्यानामिव कारणवाक्यस्यापि तटस्थलक्षणतासिद्धान्तस्योपपन्नत्वादतात्त्विकेनापि तात्त्विकलक्षणसंभवाच्च न किमप्यनुपपन्नम्। इदं सर्वमभिप्रेत्यैव चन्द्रिकाखण्डने शास्त्रिचरणैरुक्तम्-अरुन्धत्यामसतस्तारासमहस्य तात्त्विकैकतारारूपारुन्धतीलक्षणत्वप्रसिद्धेरि" ति।

अत्रच शाखाग्रादीनां चन्द्रलक्षणत्वप्रसिद्धिमनुरुध्यैव तटस्थलक्षणत्वसिद्धान्त इति खण्डनकारैरपि सूचनात् "शाखाग्रादीनामुपलक्षणत्वसिद्धान्तमेव स्वीकृत्याद्वैतमते प्रमाणान्तरगम्यस्य कारणत्वबोधनं न संभवती" त्यादिवर्णनमनवसरमेव। यतः प्रकारान्तरेण व्यवस्थायां भवन्मत उक्तप्रसिद्धिबाध एवापरिहरणीयो दोष इति किमनेन स्वमनोरथमात्रकल्पितराज्याधिकारादिनेत्यभिप्रायेण खण्डनकारैर्ब्रह्मवल्ल्यादिसिद्धस्यैव कारणत्वमुपवर्ण्यत इत्यादिकं न वर्णितम्, नतुभवदीयचन्द्रिकोक्तानां सर्वेषामपि वाक्यानामज्ञानेनेति, तेषामेव वाक्यानां परःसहस्राणामप्रसक्ता-

SGDF
Sri Gargeshwari Digital Bhandar

नां तन्नामानुल्लेखेन विलेखनेन स्वतंत्रमेकस्यापि वाक्यस्यारचनेन च किमिति ग्रन्थाडंबरः लिप्यन्तरसंपादनशक्तिर्वा प्रकाशप्रसरकारैः क्रियते इति न वयं जानीमः ॥५॥

## (६) जन्मादिसूत्रे आदिपदेन स्थितिभंगयोरेव ग्रहणम् ॥

अद्वैतिनो हि "जन्माद्यस्य यत" इत्यत्रादिपदेन स्थितिभंगयोरेव ग्रहणं नत्वन्यस्येति यद्वदन्ति, तत्रैवं चन्द्रिकाकाराः वदन्ति-यतोवेत्यत्र चतुर्णां "तमेवैकं जानथे" त्यादौ स्थित्यादीनामेकैकस्य श्रवणात्। नचाभिसंविशन्तीत्येतत् प्रलयपरम्; प्रयन्तीत्यनेन पौनरुक्त्यापत्त्या तस्य मोक्षपरत्वात्। नच प्रयन्तीत्यनेन सुषुप्तौ ब्रह्मप्राप्तिरुच्यते ; तथापि चतुष्टयाऽपरिहारात्—इति।

अत्रेदमद्वैतिनो मन्यन्ते—यत् "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत् प्रयन्त्यभिसंविशन्ती "ति वाक्यसमुदाये पूर्वतनवाक्योर्द्वयोरिमानीत्यस्य" "भूतानि" "जातानि" इतिच यथा विशेषणमेवं तृतीयवाक्येऽपि "प्रयन्तीति" विशेषणसमर्पकमेव। नह्यन्यथा प्रक्रमानुगुण्यं भवतीति। अयंभावः—"यतोवे"ति वाक्यसमुदायो हि उपलभ्यमानस्य सर्वस्योत्पत्त्यादिकमनूद्य तत्कारणत्वेन ब्रह्मनिरूपणपरः, नतु जगदुत्पत्तितत्कारणोभयनिरूपणपर इत्यवश्यमङ्गीकारणीयम् ; अन्यथा वाक्यभेदापत्तेः। तथाचोत्पत्त्याद्यनुवादार्थं यथा "भूतानी"त्यादिपदमेवं नाशानुवादार्थं "प्रयन्ती"ति पदमित्येवाङ्गीकरणीयमिति "प्रयन्ती"तिपदमपि शत्रन्तविशेषणमेव। एतेन-"जायन्ते"इत्यादितिङन्तसाहचर्येण "प्रयन्ती"त्य

SGDF Sri Gurgeshwari Digital Foundation

स्यापि तिङन्ततायाः एव युक्तत्वादिति प्रकाशप्रसरोक्तम्—परास्तम्। पूर्वतनवाक्य इव मध्यगतस्य विशेषणतायाः एव युक्तत्वात्। अन्यथा "प्रयन्ती"त्यस्यापि तिङन्तत्वे एकतिङन्तघटितत्वरूपप्रक्रमः पूर्वतनवाक्यगतः कथं वाऽत्र बाधितो न भवति? कथं वा प्रलयस्य तत्कारणत्वस्योभयस्य चात्र बोधनेन वाक्यभेदो न भवति? तथाच वाक्यत्रयेणात्र त्रितयकारणत्वमेव विवक्षितं नतु चतुष्टयकारणत्वम्। यथाच "प्रयन्ती"त्यस्य म्रियमाणमिति ब्रह्मानन्दविवरणं सौषुप्तप्रलयविवरणं वा तदनुवादार्थमस्माकमपेक्षितं तथा पूर्वमेव विवेचितम्। किं बहुना? "यतो वै" वाक्ये पूर्वतने तदनन्तरे च यथा च यच्छब्देन ब्रह्मानुवादः एवं "यत् प्रयन्ती"ति वाक्येऽप्येकस्यैव यच्छब्दस्य वर्तमानत्वात् न वाक्यार्थद्वयमत्र विवक्षितमिति स्पष्टमेवावगम्यते। अन्यथा यच्छब्दस्यानुषङ्गादिना तदावृत्त्यापात इति हि सर्वविदितमिदम्। तदुक्तं खण्डने—जन्मादित्रयस्येव श्रुतौ "अभिसंविशन्ती" त्यनेन मुक्तप्राप्यत्वस्यापि पृथक्धर्मस्योक्तौ चतुर्थेन यच्छब्देन ब्रह्मानुवादप्रसङ्गात्—इति"।

यत्तु प्रकाशप्रसरे—मोक्षस्य परमपुरुषार्थत्वेन मोक्षशास्त्रे मुक्तप्राप्यत्वस्य पृथक्वाच्यत्वादित्युक्तम्, तत्रेदमेव वक्तव्यम्—किमत्र भवतां "यतोवै"तिवाक्यत्रयमेव मोक्षशास्त्रतया विवक्षितम्, उतान्योऽपि भागो वर्तते इति। तत्रच यद्यपरेण "ब्रह्मविदाप्नोतिपरम्" इत्यनेनापि सोऽर्थः सिध्यति, किमिति सर्वार्थकल्पनमप्यस्यैवाङ्गीक्रियते? यत्तु प्रकाशप्रसरे हरिहरहिरण्यगर्भाणां सृष्ट्यादिकर्तृत्वप्रसिद्धेः स्थितिहेतुरन्य इति शंकावारणार्थं कारणे-

SGDF

क्यबोधनार्थं जन्मादिषु यच्छब्दत्रयस्याऽऽवश्यकत्वेऽप्यन्यत्र मोचकत्वाप्रसिद्धेरुक्तशंकाऽनुदयेन "सत्यं ज्ञानमि" त्यादौ ब्रह्मशब्दस्येव "प्रयन्ती" त्यत्र यच्छब्दस्याऽऽवृत्तिसंभवेन च चतुर्थस्य यच्छब्दस्य श्रुतावनावश्यकत्वात्। अन्यथा सत्यज्ञानादिवाक्येऽपि प्रतिपदं ब्रह्मपदाश्रवणात् भवद्भाष्यकारोक्तस्वरूपलक्षणानामपि प्रत्येकं लक्षणत्वं न स्यात्—इत्युक्तम्, तत्रेदं प्रष्टव्यम् यच्छस्यावृत्त्या किमिति मोक्षदाभेदोऽप्यत्र बोध्यते? यदि ज्ञेयत्वार्थम्, तर्हि तत् ब्रह्मेति तच्छब्दानंतरमेवाभिसंविशन्तीत्यपेक्षितं स्यात्, नतु पूर्वम्। तदभेदस्य सिद्धत्वेनाबोधनीयत्वात्। तथाच तच्छब्दात्पूर्वमभिसंविशन्तिपदप्रयोगेणेदमवश्यमुपगन्तव्यम् यत् हरिहरहिरण्यगर्भातिरिक्तमोक्षदशंकावारणमप्यत्र विवक्षितमिति कथं स्थितिहेतुरन्य इत्यादिशङ्कावारणार्थमिव मोक्षदोऽन्य इति शङ्कावारणार्थं चतुर्थोऽपि यच्छब्दो नापेक्षित इति भवन्त एव विवेचयन्तु। "सत्यं ज्ञानमनन्तं ब्रह्मे" त्यत्र तु समुच्चितस्यैव लक्षणत्वम्, नतु प्रत्येकं लक्षणत्वम्। व्यक्तं चैतत् न्यायरत्नावल्यामिति तेषां प्रत्येकं लक्षणत्वं न स्यादित्यापादनमिष्टापत्तिपराहतमेव।

नहि भवतामपेक्षितं लक्षणाष्टकमप्यस्मिन्नेव वाक्ये वर्तते। वाक्यान्तरेण लाभादत्राग्रहणं मुक्तप्राप्यत्वस्यापि समानमिति किमिति क्लिष्टतरं व्याख्यानमत्रादरणीयम्? नह्यभिसंविशन्तिपदं मुक्तप्राप्तत्वमेवार्थं गमयति। कुत्र वायं संकेतो गृहीत इति भवन्त एव विवेचयन्तु। एतेन—प्रयोजनसिद्धये मोक्षदत्वस्याऽपि

SGDF

वक्तव्यत्वादिति प्रकाशप्रसरोक्तमपि—अपास्तम्। उक्तवाक्ये नैव तद्विवक्षणीयमित्यत्र प्रमाणाभावात्।

वस्तुतस्तु—"यतो वै" इत्यादिसंदर्भस्य—आनन्दो ब्रह्मेत्यनेनैव पर्यवसानात् मोक्षरूपत्वेनैव ब्रह्मोपसंहारः क्रियत इति मुक्तप्राप्यत्वमपि न पृथक् निरूपणीयम्। एतेन—नचाभिसंविशन्तीतिप्रलयपरमित्यादिचन्द्रिकाग्रन्थोऽपि—परास्त इति खण्डनवाक्यमपि—व्यख्यातम्। यथाच जन्माद्येकैकं न लक्षणम्; स्थितिहेतुरन्यः स्यादितिशंकानिवारणस्यान्यथाऽसंभावात् तथा प्रकाशप्रसरकारादिभिरेव निरूपितम्। एवच जन्मादित्रयलक्षणतावाद एव समुचितः।

अत एव—"यतो वा इमानि भूतानि जायन्ते" इति संदर्भ एव विषयवाक्यतयाऽद्वैतभाष्यकारैरुपात्तः। तत्रैवहि शब्दतोऽर्थतश्च साम्यं वर्तते। "उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः। बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराडि"ति स्कान्दपुराणवाक्यं यद्यपि भगवतो हरेर्गुणाष्टकं बोधयति; तथापीदमपि विषयवाक्यतया सूत्रकारैर्विवक्षितमिति वर्णनं न संभवति।

चन्द्रिकाकारा अपि हि—"अत्र तद्विजिज्ञासस्व। तत् ब्रह्मे" तिवाक्यस्थं ब्रह्म किं जीव उत विष्णुरिति चिन्ता। तदर्थं ब्रह्मशब्दस्य रूढयर्थजीवपरित्यागेन विष्णुग्रहणे हेतुर्नास्त्युतास्तीति। तदर्थं विध्युद्देशस्थब्रह्मशब्दस्वारस्याय यतोवेत्यादिपूर्ववाक्यं जीवे कथं चिन्नेतुं शक्यमुताशक्यमिति। पूर्वपक्षस्तु—जीव एवेदं ब्रह्म; वृहजातिर्जीवेत्यभिधानात् ब्रह्मशब्दस्य

तत्ररूढ़ेः, विष्णोस्तु यौगिकत्वात् । सिद्धान्तस्तु विष्णुरेव जिज्ञास्यं ब्रह्मे"त्यादि—वर्णयन्तो ब्रह्मशब्दघटितमेव श्रुतिवाक्यं विषयतया मन्यन्ते । अतएव—भाष्योक्तश्रुतिप्राप्तकारणपरत्वा-दित्युक्तमुपपद्यते । इदमेवाभिप्रेत्य खण्डनकारा वदन्ति—"उक्तस्कान्दपुराणवचनानुसारेण जन्माद्यष्टकं लक्षणमिति-माध्वमतमपास्तमि"ति । संदिग्धश्रुत्यर्थनिर्णयार्थं खलु सूत्राणां-प्रवृत्तिः । भवदीये विष्णुतत्वरहस्ये आनुमानिकेश्वरवादखण्डनेन श्रौतकारणतावाद एव यः समर्थितः सोऽपि भवतामपि श्रुतिरेव सूत्रविषयवाक्यमित्यवगमयति,नतु पुराणवचनान्यर्थवादकल्पानि। यत्तु सूत्रकारा अस्मद्भाष्यकारा वा पुराणवचनान्यपि तत्र तत्र प्रमाणयन्ति, तदिदं श्रुत्यर्थोपबृंहणार्थमेव,नतु विनिर्णयार्थं विषय-वाक्यतया । एवं चोक्तस्कान्दपुराणवचनं यतोवेतिवाक्ये लक्षणा-न्तरं विवक्षितमिति बोधनार्थमितियदि वर्ण्यते, तर्हि नेदमुपपन्नम् । नहि त्रितयकारणत्वेन ब्रह्म न लक्षितम्, त्रितयलक्षणत्वस्य दुष्टत्वं वा वर्तते इति किमिति वाऽत्र स्कान्दपुराणवचनमुपन्य-सनीयम् । इदमत्रावश्यमुपगन्तव्यम्—यत् "स्मृतेश्च" "स्मरन्ती" त्येवंप्रकारेणश्रुत्यर्थविनिर्णयार्थमेव पुराणवचनमुपस्थापयन्तः श्रुतिवाक्यान्येव सर्वतो विषय इति नियमं गमयन्तीति । तथा-चोक्तसूत्रविषयत्वं विनैव गमकं पुराणवचनानां न वक्तुमलमिति । इदमेवाभिप्रेत्य—"श्रुत्यनुसारेण प्रतीतं जन्मादित्रितयलक्षणत्वं परित्यज्य पुराणवचनानुसारेणाष्टकस्य लक्षणत्वकल्पनस्यानुचि-तत्वादि"ति खण्डनकारा वदन्ति ।

SGDF
Sri Gargeshwari Digital Foundation

अत्रेदं मन्तव्यम्—"यतोवे" त्यादि "तत् ब्रह्मे"त्यन्तमेकमेव वाक्यम्। यत्तच्छब्दयोराकांक्षासत्त्वेन विभागे साकांक्षत्वस्य तत्र वर्तमानत्वात्। "तद्विजिज्ञासस्वे" त्येकस्यैव विधेः श्रवणाच्च। यथाहि अत्र ब्रह्मपदार्थः सन्दिग्धः, एवं तदुपस्थापकयत्पदार्थोऽपि। अत एव—"जन्माद्यस्य यतः" इति सर्वस्यापि विषय-वाक्यत्वं-सूचितम्। अन्यथा ब्रह्मजिज्ञासेत्यनेनैव गतार्थत्वादिदमधिकरणमेव व्यर्थं स्यात्। एतेन—"यतो वे"तिश्रुतेरपि न साक्षात् विषयवाक्यत्वम्, किन्तु "तत् ब्रह्मे"तिवाक्यघटकत्वेनैव। अत्र कारणत्वस्यानिर्णेयत्वात् इत्यादि प्रकाशप्रसरोक्तम्-अपास्तम्। अयं भावः—यदि कारणत्वमत्रानिर्णेयम्, तर्हि कथं वा भवदीयचन्द्रिकायां—"श्रुतिप्राप्तकारणपरत्वादि"त्युक्तमिति भवन्त एव विवेचयन्तु।

निर्णीतो हि पूर्वाधिकरण एव ब्रह्मपदार्थ इति तन्निर्णयार्थ-मधिकरणान्तरं व्यर्थमेव भवताम्। नहि जिज्ञास्यं ब्रह्म विष्णुरेवेति पूर्वाधिकरणनिर्णीते पुनरधिकरणान्तरसार्थक्यं संभवति। यत्तु सुधायां—"ब्रह्मणो लक्षणमेवात्रोच्यते" इत्युक्तं, तदपीदानीमेवोपपद्यते। चन्द्रिकाकारा अपि—"जिज्ञासाकारणीभूतगुणपूर्तिप्रसिद्धये। जीवादिभेदकं विष्णोः विश्वकर्तृत्वमुच्यते॥"—इति वदन्तो कर्तृत्वमात्रविनिर्णय एवात्र करणीय इति वदन्तश्च "यतोवे"तिवाक्यमेवैतदधिकरणविषयं मन्यन्ते। एतेन—अत्र "तद्विजिज्ञासस्व तद् ब्रह्मे"ति वाक्यस्थं ब्रह्म किं जीव उत विष्णुरिति वाक्यमपि चन्द्रिकाकाराणां—व्याख्यातम्। तस्यैतदधि-

SGDF
Sri Gargeshwari Digital Foundation

कारणपूर्वोत्तरपक्षप्रयोजनसमर्पणपरत्वात् । अतएव ह्यत्र लोकसिद्धकारणत्वस्य न ग्रहणमित्यादि भवदीयसिद्धान्त उपपद्यते । तथाच—"यतोवे"तिवाक्यमपि विषय इत्येवाङ्गीकरणीयम् । अयमाशयः—जिज्ञासासिद्धये ब्रह्मशब्देन जीवो न विवक्षित इति विवेचयितुमेव खलु इदं सूत्रम् । साच विश्वकर्तृत्वमात्रवर्णनेनापि सिद्ध्यतीति किमिति लक्षणाष्टकविवक्षणमत्र क्रियत इति ॥६॥

## [७] जन्मादिप्रत्येकलक्षणत्वनिरासः ॥

अत्रायं चन्द्रिकाकाराभिमतः सिद्धान्तः—जिज्ञास्यतया प्रतिज्ञातं ब्रह्म न जीव इति विनिर्णयार्थं "जन्माद्यस्य यत" इति सूत्रम् । अनेनच जगज्जन्मकारणत्वं यत्र बोधितं तदिदं जीवे न संभवतीति ब्रह्मपदं विष्णुपरमिति निर्णीयते। अत्र विश्वस्थितिहेतुत्वादिकमपि प्रत्येकं लक्षणान्तरं सूचयितुमादिपदम् । तेन वचनान्तरसिद्धलक्षणाष्टकविवक्षापि सूच्यते—इति । अत्रेदमद्वैतिनो मन्यन्ते—"अथातो ब्रह्मजिज्ञासे"तिसूत्रविषये "तद्विजिज्ञासस्व तद् ब्रह्मे"ति वाक्ये कथं निर्गुणं ब्रह्म विवक्षितुं शक्यते ? तेन कारणत्वादिगुणसमर्पणात् ; तस्य जीव एव हिरण्यगर्भादौ संभवादिति शंकामत्र कारणत्वं तटस्थलक्षणतयैव विवक्षितं न स्वरूपतयेति न दोष इति बोधनेन निवारयितुमिदं सूत्रमिति । किमत्र युक्तम् ?—तथेदमवश्यमङ्गीकरणीयम्—यत् "जन्माद्यस्य यत" इति जन्मादिपदं बहुव्रीहिसमासनिष्पन्नं जन्मनोऽपि परामर्शकं मतद्वयेऽपीति ।

SGDF Sri Gurgeshwara Digital Foundation

अन्यथा चन्द्रिकामतेऽपि विश्वकर्तृत्वं कथमिवोच्यते ? तत्रच जन्मादिपदं यदेकवचनान्तं प्रयुक्तं तेन जन्मघटितसमुदाय एव विवक्षणीय इत्यकामेनाप्युपगमनीयम् । तच्च जन्मादीनां बहूनां यत्रैकस्मिन् वाक्ये ग्रहणं तस्यैव विषयवाक्यत्वं जन्मादीनां सर्वेषां न प्रत्येकं लक्षणत्वमिति च गमयतीत्यप्यकामेनाप्युपगमनीयम् ।

तत्र जन्मादिपरामर्शः—"उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः । बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट् ।" इति स्कान्दपुराणवचनेऽपि वर्तते "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतावपीति न विवादास्पदोऽयं विषयः । तत्र पुराणवचनविषयमिदं सूत्रमिति गमकं विना न वर्णयितुं शक्यते । "स्मृतेश्च" "स्मरन्ति" चेत्यादिना श्रुत्यर्थसंशयनिरासार्थमुपष्टम्भकतया पुराणवचनादि स्मृधातुप्रयोगेणैव सूत्रकारः सूचयति । नचात्र स्मरतिर्वर्तते इति "यतोवे"ति श्रुतिरेवात्र विषय इति वर्णनीयम् । तत्रच विश्वकर्तृत्वमात्रेण गुणपूर्तिप्रसिद्धिरिति चन्द्रिकोक्त्या त्रितयलक्षत्ववादः चतुष्टयलक्षणत्ववादो वा न तेषां संमत इति प्रत्येकलक्षणतापक्षे चन्द्रिकाकाराद्रूते जन्मादीतिसूत्रनिर्देशस्वारस्यभङ्गोऽपरिहरणीय एव । एतदेवाभिप्रेत्य चन्द्रिकाखण्डनकाराः—"यतो वेति" श्रुतेः शब्दतोऽर्थतश्च सारूप्येण प्रधानविषयवाक्यतया तदनुसारेण जन्मादित्रयस्याद्वैतभाष्ये लक्षणत्वाभिधानादि"ति, "श्रुत्यर्थनिर्णयार्थं प्रवृत्तस्य सूत्रस्य सरूप'यतोवे'तिश्रुत्यनुसारेण प्रतीतं जन्मादित्रयं परित्यज्य पुराणानुसारेणाष्टकस्य लक्षणत्वकल्पनस्यानुचितत्वात्" इति च । "यतो वे"तिवाक्यमेव सूत्रकृताऽत्र विवक्षितं

चेदपि नैतत्समानार्थकवाक्यान्तराणामप्यत्राविषयत्वं मन्यते सूत्रकारः। एवमप्येतदधिकरणार्थपर्यालोचनावसरे सर्वेषां तेषां वाक्यन्तराणामपि विचारो न भाष्यकाराणामाचरणीयः। तथाच चन्द्रिकाकाराणामुक्तस्कान्दपुराणादिवचनानामप्यत्रैवोपन्यासेन विवरणं न सूत्राक्षरानुगुणमिति तु सिद्धमेव। अङ्गीकृतेऽपि विषयत्वे गुणाष्टकप्रत्येकलक्षणतावादो नोक्तसूत्रारूढः। यतोऽत्र समुच्चितकारणत्वेनैकैकलक्षणकहरिहरादिब्रह्मवादनिरास एव विवक्षितः, नह्यन्यथा जिज्ञास्यं ब्रह्मैव निर्णीतं भवति। एतदेवा-भिप्रेत्य खण्डनेऽपि—प्रधानविषयवाक्यतये" इत्युक्तम्। सति संभवे हि सूत्राक्षरानुगुणं विषयवाक्यमेव ग्रहीतव्यम्।

एतेन—शास्त्रयोनित्वादित्यादौ शब्दतोऽर्थतश्च सरूपश्रुत्यला-भेन विषयवाक्येन सर्वेणापि सरूपेण भाव्यमिति नियमासंभवा-च्चेति प्रकाशप्रसरोक्तम्—अपास्तम्। असतिबाधक एवोक्तनियमस्य स्वीकारात्। नचात्रोक्तविषयवाक्यमात्रग्रहणे किंचित् बाधक-मस्ति। नह्युक्तवाक्यमात्रेण जीवव्यावृत्तब्रह्मपदार्थोऽनिर्णीतो-भवति। तत्र चन्द्रिकाकारमते जन्महेतुत्वमात्रेणापि जीवव्या-वृत्तिसिद्धिः मुक्तप्राप्यत्वमात्रेण वापि तत्सिद्धिरिति न गुणा-ष्टकविवक्षाऽत्रापेक्षिता।

ये हि प्रकाशप्रसरकारादयः—"मोचकत्वस्यान्यत्राप्रसिद्धेरि"-ति-वर्णयन्ति, तेषां मतरीत्या मुक्तप्राप्यत्वमेवासन्दिग्धं ब्रह्मलिङ्ग-मिति भवति। तथाच "यत्प्रयन्ती" त्यत्र "भिसंविशन्ती" त्यनेन मुक्तप्राप्यत्वमपि सूत्रकारेण यदि विवक्षितं स्यात्, तर्हि "मुक्तपा-

SGDF
Sri Gargeshwari Digital Foundation

द्यस्य यत" इति खलु सूत्रमपेक्षितं स्यात्, नतु "जन्माद्यस्य यतः" इति। "जीवकारणत्वे जातादिपदानां मुख्यार्थत्यागापत्तेः" "अभिसंविशन्ती"ति पदोक्तमुक्तप्राप्यत्वस्य सर्वथाऽनुपपत्तेरि" तिच वर्णयन्तः चन्द्रिकाकारा अपि मुक्तप्राप्यत्वमेवासाधारणं लिङ्गं मन्यन्ते। तथाच "जन्माद्यस्य यत" इति सूत्रयतामाचार्याणाम "भिसंविशन्ती"त्यनेन मुक्तप्राप्यत्वविवक्षा न संमतेत्येव युक्तमुत्पश्यामः। यथाचास्मन्मते प्रयन्त्यभिसंविशन्तिपदयोरुभयोरप्यपेक्षा, तथा पूर्वमेव विवेचितम्। एतेन—"अभिसंविशन्ती" त्यनेन प्रलयविवक्षायां पौनरुक्त्यापातः, अभीत्यस्य वैयर्थ्यापत्तिरित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्।

यत्तु "यतो वे"तिश्रुतेरपि न साक्षाद्विषयवाक्यत्वम्, किन्तु तद्ब्रह्मे तिविषयवाक्यघटकत्वेनेति,तदपि "जन्माद्यस्य यतः"इत्येवंसूत्राक्षरराननुगुणमेव। एवंच ब्रह्मशब्दार्थनिर्णयार्थमेवाधिकरणान्तरवैयर्थ्यमपि भवतां मते समापतति। नहि ब्रह्मशब्दस्वारस्यं गुणपूर्णे इत्यनिर्णये पूर्वाधिकरणसिद्धान्तः सिद्धो भवेत्। ब्रह्मात्मनारायणादिशब्दघटितानां सर्वेषामपि विषयत्वं हि पूर्वाधिकरणे संमतमिति कथं वा "यतो वे"ति वाक्यमपि तत्रानिर्णीतम्? लौकिकरूढे र्विद्वद्रूढिर्बलीयसीतिन्यायान्तरबोधनं हि पूर्वतन्त्र एव गतमिति व्यर्थमेवाधिकरणमिदमापद्येत, अस्मन्मतेतु—"आनन्दं ब्रह्मे"त्यादिवाक्यबोधितं निर्गुणं ब्रह्म विषयः पूर्वाधिकरणे, अत्र तु तटस्थलक्षणविधयातत्र गुणवाक्योपपादनं क्रियत इति न वैयर्थ्यम्। जन्माधिकरणोपसंहारे भाष्यकारैः—अन्यान्यप्येवंजातीय-

SGDF Sri Gangeshwari Digital Foundation

कानि स्वरूपकारणविषयाणि वाक्यान्युदाहर्तव्यानीति यदुक्तम्, तस्यापीदमेव तात्पर्यम्। न केवलकारणवाक्यमत्र विषयः, किन्तु स्वरूपवाक्यसमवहितकारणवाक्यमेवेति तु निष्कर्षः। यत्तु प्रकाश-प्रसरे—अत्र कारणत्वस्यानिर्णयादित्युक्तम्, तत्रेदं प्रष्टव्यं-कारण-वाक्येन किं प्रमाणान्तरमितमेव कारणत्वं विवक्ष्यते उत नेति। आद्ये—भाष्योक्तश्रुतिप्राप्तकारणपरत्वादिति चन्द्रिकाविरोधः। द्वितीयेतु कथं कारणत्वस्याऽनिर्णयः? नह्यस्य वाक्यस्य कारण-त्वेन ब्रह्मबोधनेऽपि तात्पर्याभावे उक्तचन्द्रिकोपपद्येत। अस्य हि वाक्यस्य प्रकाशकाराः—"श्रुतिमूलविद्वत्प्रसिद्धिप्राप्तस्ये"ति-यद्व्याचक्षते, तदपि जगत्कारणत्वं श्रुतिनिर्णयमेव, नतु आनुमा-निकमिति गमयति। एवंच "यतो वे" त्यस्य शब्दतोऽर्थतश्च सारूप्यवर्णनं खण्डनकाराणामत्रोपपन्नमेव। यथाचोक्तस्कान्द-पुराणवचनस्यात्रोपन्यासो न सूत्रकृतामभिमतस्तथा पूर्वमेव विवेचितम्। नह्यत्र सूत्रे स्मृधातुप्रयोगेण स्वाभिप्रायप्रकाशनं पुराणमुखेन सूचयन्ति। यत्तु अत्र मुख्यत्वेन स्मृतेः श्रुत्य-पेक्षयाऽभ्यर्हितत्वादिकमुक्तं, तदिदं श्रुतिविरुद्धस्मृत्यप्रामाण्यस्य मीमांसादिसिद्धत्वादसंगतमेव। सर्वथा तु गुणाष्टकप्रत्येकलक्ष-णता न सूत्रकारसंमतेति सिद्धमिति ॥७॥



SGDF
Sri Gangeshwari Digital Found

## (८) स्वरूपलक्षणलक्षणनिष्कर्षः ॥

यत्तु खण्डनकाराः—स्वरूपलक्षणत्वं लक्ष्यवाचिपदसमानाधिकरणपदनिरूपितवृत्तिज्ञानविशेष्यत्वम्, उक्तविशेष्यत्वाभावे सति लक्षणत्वं तटस्थलक्षणत्वमिति वदन्ति, तस्यायमाशयः—यत् विशिष्टतादात्म्यप्रतीतिद्वारकोपस्थितिविषयोपलक्षितचित्स्वरूपत्वम् स्वरूपलक्षणत्वम्। व्यक्तं चैतन्न्यायरत्नावल्याम्। तादात्म्यशब्देनचात्र भेदाभावो विवक्ष्यते, यः पदार्थविधयैव भासते। उपपादितं हि न्यायरत्नावल्यां "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादौ सत्यभेदाभावो ब्रह्मवृत्तीत्येव बोधो विवक्षित इति। पदार्थविधया भेदाभावप्रतीतिश्च तत्रैव भवति यत्रात्यन्तिक एवाभेदो विवक्षितः, नतु भेदाविरोध्यभेदः। एतेन—सत्यज्ञानादीनां ब्रह्मस्वरूपात् परस्पराच्चाभेदस्य सिद्धान्तितत्वेन निर्विशेषात्यन्ताभेदे भेदस्य भेदप्रतिनिधिविशेषस्य वाऽभावेन त्वन्मत आनन्दादिब्रह्मणोर्लक्ष्यलक्षणभावानुपपत्तिर्दुर्वारेति प्रकाशप्रसरोक्तम्—अपास्तम्। तथाच "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादौ लक्षणसमन्वयः सिद्ध एव स्वरूपलक्षणस्य। शाखाग्रं चन्द्र इति वाक्ये तु न शाखाग्रचन्द्रयोरात्यन्तिकाभेदो विवक्षितो विवक्षितुं शक्यते वेति नोक्तलक्षणस्यातिव्याप्तिः। यत्तु सत्यत्वानन्दत्वादिकं स्वरूपलक्षणमिति भाष्यभामत्यादिषु व्यवस्थापितमिति प्रकाशप्रसर उक्तं तस्यापि नेदानीं विरोधः। उपलक्षिततादात्म्यप्रतीतिपूर्वतनविशिष्टतादात्म्यप्रतीति-



SGDF
Sri Gargeshwari Digital Foundation

विषयनिरूपणपरत्वादुक्तभाष्यादीनाम् । उपलक्षितभेदसंशयनिरासोऽप्युपहिताभेदज्ञानेन विशिष्यज्ञानेनैव वा भवतीति न्यायरत्नावल्यां यदुक्तं तेनेदमवगम्यते यत्तदुपलक्षिताभेदज्ञानपूर्वतनविशिष्टतादात्म्यप्रतीतिमादायाऽप्युक्तलक्षितलक्षणपरिष्कारः कर्तुं शक्यत इति । एतेन—सत्यादिवाक्यस्य लक्षणवाक्यत्वेन विशिष्टार्थपरत्वाभावस्य कल्पतरूक्त्या चैतन्यमात्रतात्पर्यकत्वेन निर्विकल्पकज्ञानजनकतया विशेष्यपदोपादानवैयर्थ्यादिति प्रकाशप्रसरोक्तम्—परास्तम् ।

एतेन—लक्ष्यवाचिपदसमानाधिकरणेत्यत्र सामानाधिकरण्यं लक्ष्यवाचिपदप्रवृत्तिनिमित्तधर्मसमानाधिकरणधर्मप्रवृत्तिनिमित्तकत्वमिति खण्डनवाक्यमपि—व्याख्यातम्, तस्यापि पूर्वतनविशिष्टप्रतीतिविषयपरत्वात् । वस्तुतस्तु—"कारणं ब्रह्मानूद्यानन्दत्वविधानादि"ति भामतीवाक्येऽपि नानन्दत्वं विधेयतयाऽभिप्रेतम्, किन्तु आनन्दस्वरूपमेवेति कल्पतरौ स्पष्टम् । अतएव कल्पतरौ —"आनन्दः सत्यादेरप्युपलक्षणमि"ति निरूप्य, "ननु आनन्दादेर्ब्रह्मणो भेदे न ब्रह्मलक्षणत्वं, अभेदे वाक्यार्थासिद्धिरिति पूर्वपक्षय्याज्ञातस्याविशिष्टस्य च वाक्यार्थत्वसंभवादभेद एव संमत" इति निरूपितमुपपद्यते ।

यत्तु कल्पतरौ—"इह हि कल्पितभेदव्यक्त्याश्रितैः सामान्यैर्या व्यक्तयो लक्ष्यन्ते तास्तद्रूपत्वं न जहती"त्युक्तम् । तदिदं सत्यादिलक्ष्यस्य सत्यात्मकत्वं नानुपपन्नमिति निरूपयितुमेवेति पूर्वतनसन्दर्भेणैवावगम्यत इति "सत्त्वादि न जहाति नः" इति वाक्यस्य

SGDF
Sri Gangeshwari Digital Foundation

सदाद्यात्मकं भवतीत्येवार्थस्तत्र विवक्षितः। व्याख्यातं चैवमेव परिमलेऽपि—"सत्तादि न जहातीति—सदाद्यात्मकं भवती"ति। यत्तु प्रकाशप्रसरे—परिमलेऽपि "सत्याद्यात्मकत्वं न स्यादि"ति। सत्ताजातितादात्म्यापन्नं हि घटादिकं सदात्मकमिष्यत एवेत्युक्तमित्युक्तम्, तत् कल्पतरुगतपूर्वपक्षसन्दर्भगतवाक्यविवरणरूपमेवेति न तेन तेषां किमपि प्रयोजनं भविष्यति।

एतेन—"तथेहापि मायाकल्पितभेदघटपटाद्यनुगतसत्तासामान्यवाचिनः सच्छब्दस्य सद्भेदकल्पनाधिष्ठाने ब्रह्मणि प्रयोगे सति तद्वाच्येन सत्तासामान्येन लक्ष्यं ब्रह्म सदात्मकत्वं न जहाती"ति परिमलवाक्योपन्यासोऽपि न तेषामनुकूल इति—सूचितम्। अनेन सत्यत्वं न लक्षणं किन्तु सद्रूपत्वमित्येव गम्यते। स्पष्टं चायमर्थः परिमल एव—"तथाच कल्पितभेदसामान्यतदपेक्षऽसत्याकारबाधेन सत्यज्ञानानन्दात्मकं ब्रह्म निश्चीयते" इत्युपसंहारवाक्य इति प्रकाशप्रसरकाराणां "भाष्यभामतीकल्पतरुपरिमलैः सत्यत्वादीनां स्वरूपलक्षणत्वावगमादि"ति यदुक्तं तदिदं व्यामोहमूलं विप्रलंभमूलं वेत्यत्र न विशयलेशोऽपि। एवंच—लक्ष्यवाचिपदसमानाधिकरणपदनिरूपितवृत्तिज्ञानविशेष्यत्वं स्वरूपलक्षणत्वमिति खण्डनकाराभिमतस्य लक्षणस्य सत्यत्वादावव्याप्त्यापादनं प्रकाशप्रसरकाराणामनवसरमेव।

एतेन—"आनन्दो लक्षणं चेत् जगत्कारणमपि स्वरूपलक्षणमस्तु" इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। यद्यत्र तटस्थलक्षणे स्वरूपलक्षणस्यातिव्याप्तिरुच्यत इति वर्ण्यते, तर्हि नेदं संभवति।

SGDF Sri Gargeshwari Digital Foundation

तथाहि—यद्यत्र विशिष्टतादात्म्यप्रतीतिपूर्वकोपलक्षिताभेदोऽपि विवक्ष्यते, तर्हि अस्यापि स्वरूपलक्षणत्वमभिमतमेव । विशिष्टप्रतीतिदशामात्रविवक्षया खलु तटस्थलक्षणत्वव्यवहारः । नहि श्रुतौ कुत्राऽपि कारणत्वेन ब्रह्मलक्षकं वाक्यं "कारणं ब्रह्मे"ति दृश्यते । "यतो वा इमानि भूतानि जायन्ते" इत्येवमाकारकं खलु दृश्यते । नच तत्र विनाऽवान्तरतात्पर्यनिर्णयं उपलक्षितबोधः प्रमाणिकः । अतएव "तस्यच निर्णयवाक्यमि"ति वाक्यान्तरानुसन्धानानन्तरमेव तत्र तटस्थलक्षणव्यवहार इति पूर्वमेव विवेचितम् । अत्रच कारणत्वपरित्यागो विवक्षित इति हि स्पष्टमेव परिमलादौ निरूपितम् । तदुक्तं परिमले—"जगत्कारणत्वेन तदनुवादेऽपि नानुवाद्यसर्गस्य वाक्यार्थानुप्रवेशः । ब्रह्मप्रातिपदिकार्थमात्रस्य बुभुत्सितत्वेनाबुभित्सतस्य कारणत्वस्यापि वाक्यार्थानुप्रवेशे कल्पकाभावादि"ति ।

अयं भावः—विशिष्टप्रतीतिपूर्वकोपलक्षितप्रतीतिपर्यवसाने सत्यपि तस्यैव स्वरूपलक्षणपरत्वम्, यत् विना वाक्यैकवाक्यतां लक्षणयोपलक्षितबोधपर्यवसायि । यथा "सत्यं ज्ञानमि"त्यादिवाक्यम् । "यतोवे" त्यादिकं तु वाक्यैकवाक्यतयैवोपलक्षितबोधपर्यवसायीति न स्वरूपलक्षणपरम् ।

एतेन—"यतोवे"ति वाक्यस्यापि कारणत्वद्वारा स्वरूपलक्षणमूलत्वस्य भामत्यामुक्तत्वेन तद्वाक्यमपि लक्षणया कारणत्वरहितब्रह्मबोधकमिति त्वदीयसिद्धान्तात् सत्यादिवाक्यात् कारणवाक्यमविशिष्टमेवेति प्रकाशप्रसरोक्तम्—परास्तम् । एवंच—जगत्-

SGDF Sri Gangeshwari Digital Found

कारणं ब्रह्मेति वाक्यमपि न स्वरूपलक्षणपरमिति सूचितम्।

एतेन—सूत्रे "यत" इति श्रवणेन तदित्यध्याहारस्यावश्यकत्वेन "तद्ब्रह्मे" ति सामानाधिकरण्यस्य लब्धतया भवदुक्तवृत्तिज्ञानविशेष्यत्वस्य तत्पदार्थभूते कारणे सत्त्वेन स्वरूपलक्षणत्वापत्त्या तटस्थलक्षणपरतया व्याख्यानमसङ्गतमेवेति प्रकाशप्रसरोक्तमपि—परास्तम्। अत्रहि वाक्ये कारणत्वब्रह्मणोः सम्बन्धो याभ्यां "यतो जन्मादि" इतिपदाभ्यां बोध्यते तत्र हि न सामानाधिकरण्यं वर्तत इति लक्षणस्वरूपसमर्पकं पदं न समानाधिकरणम्। नहि तत्पदेनात्र लक्षणं समर्प्यते। लक्ष्यस्वरूपं खलु तत्र प्रतिपाद्यते। सत्यं ज्ञानमित्यत्रतु लक्षणस्वरूपमपि समानाधिकरणपदेनैव समर्प्यत इति न दोषः। यदि तु लक्ष्यवाचिपदसमानाधिकरणपदनिरूपितवृत्तिज्ञानविशेष्यत्वमित्यत्र समानाधिकरणपदपदेन तन्मात्रविवक्षा क्रियते, तदा जगत्कारणं ब्रह्मेतिवाक्यबोधितस्यापि कारणत्वस्य न स्वरूपलक्षणत्वापत्तिः। यतोवेत्यादिना व्यधिकरणपदेनापि बोधितत्वात्। कारणत्रितयजन्यं ज्ञानं तु अध्यासस्वरूपलक्षणमेव, न तटस्थलक्षणम्। अत एव हि "कोऽयमध्यासो नामे" ति स्वरूपविषयक एव प्रश्न उपपद्यते। यथाचात्र किंशब्दस्याक्षेपार्थत्वमिव प्रश्नार्थत्वमपि तथाऽन्यत्र विस्तृतम्। एतेन—शाखाग्रं चन्द्र इतिवत् कारणत्रितयजन्यं ज्ञानमध्यास इत्यध्यासतटस्थलक्षणेऽतिव्याप्तिरिति प्रकाशप्रसरोक्तम्—अपास्तम्। शाखाग्रं चन्द्र इत्यस्य तु शाखाग्रे चन्द्र इति व्यधिकरणपदेनापि निर्देशान्न दोषः।

SGDF
Sri Gargeshwari Digital Foundation

एतेन—तटस्थलक्षणमप्ययुक्तम्; शाखाग्रं चन्द्र इति प्रयोगेण तटस्थशाखाग्रे वृत्तिज्ञानविशेष्यत्वेनाव्याप्तेरिति प्रकाशप्रसरोक्तमपि परास्तम्, शाखाग्रे चन्द्र इत्यपि निर्देशसत्त्वेनादोषात्। अत्रच स्वरूपलक्षणवाक्ये द्वितीयलक्षण एव लक्षणत्वमपि विवक्षितमिति किं तदिति बुभुत्सया प्रवृत्तानामेव लक्षणवाक्यत्वं संमतमिति मन्तव्तम्। एतेन—"कर्तारमेकं पुरुषमि"त्यादौ कर्त्रादेः नीलो घट इत्यादौ नीलादेश्च स्वरूपलक्षणत्वापत्तिरिति प्रकाशप्रसरोक्तम्—अपास्तम्; उक्तवाक्यादेरलक्षणवाक्यत्वात्। पृथिवीत्वमपि पृथिवीस्वरूपलक्षणं न विवक्षितम्, भेदादिति तत्तटस्थलक्षणत्वापत्तिः प्रकाशप्रसरापादितेष्टापत्तिपराहतैव। यत्तु खण्डने प्रथमलक्षणे लक्षणपदं न प्रयुक्तम्, तस्यायमाशयः—असंकीर्णस्वरूपबोधकस्यास्य वाक्यस्य लक्षणत्वव्यपदेश औपचारिक एव, नतु मुख्यलक्षणत्वमिति। अतएव—कल्पतरौ "आनन्दादेर्ब्रह्मणो भेदे न ब्रह्मलक्षणत्वम्। अभेदे वाक्यार्थानुपपत्तिरि" त्येव वर्णितम्, नत्वभेदेऽपि लक्ष्यानिष्ठत्वात् लक्षणत्वासिद्धिरि"ति। यथाच ज्ञानत्वानन्दत्वादिकं विषयाव्याप्यं तदनधीनं वा न सोपाधिकं तथाऽद्वैतसिद्ध्यादिषु जडत्वनिरुक्तौ व्यक्तमेवेति सोपाधिकं कारणत्वं कथमपि न स्वरूपलक्षणतामर्हति। एवंच—"देवस्यैष स्वभाव" इत्यादिवचनानां कल्पितकारणताबोधन एव तात्पर्यमिति "कारणत्वमपि स्वरूपलक्षणमेवे" ति प्रकाशप्रसरोक्तिरपि स्वमनोरथमात्रमेव। इदंहि वर्णनं यदि स्वरीत्या, तर्हि नास्माकं किमपि वक्तव्यम्। यद्यद्वैतमतरीत्या तर्हि तु बाधितम्। उपपादितं चेदं

SGDF Sri Gurgeshwari Digital Foundation

पूर्वमेव। "एवं धर्मानि" तिवाक्येन कारणत्वं ब्रह्मधर्म एव कल्पित इति गम्यते पूर्वोक्तयुक्तिभिरिति न कथमपि कारणस्वरूपलक्षणताप्रसक्तिः। एतेन—कारणत्वादिगुणानां स्वरूपलक्षणत्वं दुर्वारमिति प्रकाशप्रसरोक्तम्—अपास्तम्।

एतेन—लक्षणत्वनिर्वचनमप्ययुक्तम्, ब्रह्म ज्ञानं नवेति संशयविरोधिनि ब्रह्म ज्ञानमिति ज्ञाने ज्ञानत्वस्य प्रकारत्वेऽपि ज्ञानस्याप्रकारत्वात्, अभेदस्य संसर्गत्वविवक्षायामप्यखण्डार्थत्वभङ्ग इत्यादिप्रकाशप्रसरोक्तमनवसरमिति—सूचितम्। नहि ब्रह्म ज्ञानमितिज्ञाने ज्ञानत्वस्य प्रकारत्वमूरीकुर्मः किंतु ज्ञानस्यैवाभेदसंबन्धेन। इदं हि लक्षणं लक्ष्यार्थबोधपूर्वतनशक्यार्थबोधदशाभिप्रायेणैव प्रवृत्तमिति तदानीमखण्डार्थत्वमसंमतमेवाद्वैतिनामपीति सर्वविदितमिदम्। अत्र संशयविपर्ययौ स्वरूपलक्षणसमन्वयावसरे लक्षणभेदविषयौ गृहीतव्यौ। तटस्थलक्षणसमन्वयावसरे लक्ष्येतरभेदविषयाविति मन्तव्यम्। अत एव ब्रह्म ज्ञानं नवेति संशयविरोधिनि ब्रह्म ज्ञानमिति ज्ञाने लक्षणसमन्वय इत्येव खण्डन उपपादितम्। तथाच—पर्वतो वह्निमान् नवेतिसंशयविरोधिज्ञानविषयस्य धूमस्य पर्वते वन्हिमदितरभेदसंशयविरोधिज्ञानविषयत्वाभावात् पर्वतो धूमा नेति संशयविरोधिज्ञानविषयत्वाभावाद्वा न पर्वतलक्षणत्वापत्तिः। एतेन—पर्वतो वह्निमान्नवेति संशयविधिनि वन्हिव्याप्यधूमवान् पर्वत इति ज्ञाने प्रकारीभूय भासमानस्य धूमस्य पर्वतलक्षणत्वापत्तिरिति प्रकाशप्रसरोक्तमपि—अपास्तमित्यलमतिविस्तरेण। एवं च लक्ष्यगतागते स्वरूपतटस्थल-

SCDF

क्षणे इति कल्पनादिकमनुक्तोपालंभनमिति खण्डनवाक्यमुपपन्न-मेव। यथाच लक्ष्यगतागते अपि स्वरूपतटस्थलक्षणे संभवतः, तथा पूर्वमेव विवेचितम्। यथाच—खण्डनकाराणां कल्पनैव प्रामाणिकी तथा स्पष्टमेव निरूपितमिति—"त्वदुक्तकल्पनानां" इत्यादि-प्रकाशप्रसरवाक्यमकिंचित्करमेव। यत्तु क्वचित् प्राचीनग्रन्थेषूक्त-त्वाच्चेत्युक्तं प्रकाशप्रसरे, तत्र क्वचित्पदेन को वा ग्रन्थोऽभिमत इत्येव सहृदयमुपपादनीयमिति प्रार्थयामः।

यत्तु विवरणेऽर्थप्रकाशनसमर्थं ज्ञानं स्वरूपलक्षणमित्युक्तं तस्यायमेवाशयः—यत् विषयानुवृत्त्युपलक्षितचैतन्यमेव स्वरूप-लक्षणमिति। अर्थप्रकाशनसमर्थमित्यनेन वृत्त्युपलक्षितमित्येव गृह्यते। अतएव तत्रैव विषयानवच्छिन्नमिति विशेषणं सार्थकं भवति। सर्वथाचोक्तविवरणवचनानुसारेण सामर्थ्यस्यापि कार-त्वस्य स्वरूपलक्षणत्वविवक्षाकल्पनाया नावसरलेशोऽपि। एतेन—सामर्थ्यस्यापि प्रतिबन्दीग्रस्तत्वात् न स्वरूपलक्षणत्वमिति प्रकाशप्रसरोक्तमनुक्तोपालंभनमिति सूचितमिति सर्वं सुस्थम्॥८॥

## [९] जगत्कारणत्वाजिज्ञास्यत्वोपपत्तिः॥

यत्तु चन्द्रिकायां इतरव्यावृत्त्यर्थमानन्दत्वादेरिव कारणत्व-स्यापि जिज्ञास्यत्वं वक्तव्यम्। अन्यथा समन्वयाविरोधाध्याय-योस्तद्व्युत्पादनं न स्यादिति वर्णितम्। तत्रेदमद्वैतिनां समाधा-नम्—नहि वयमानन्दत्वं जिज्ञास्यमिति वदामः, किन्तु आनन्दस्व-रूपमेव। "सत्यं ज्ञानमानन्द" मित्यादावपि यथा स्वरूपलक्षण-त्वव्यवहार औपचारिकः, तथा पूर्वमेव कल्पतरुपरिमलाद्यनुसा-

SCDF

रेण व्यवस्थापितम् । नहि जगत्कारणत्वमपि सोपाधिकं कारणतासंबंधेन जगद्वा ब्रह्मस्वरूपलक्षणं विरुद्धस्वभावत्वादिति पूर्वमेव विवेचितम् । तथाच जगत्कारणत्वस्यावान्तरतात्पर्यविषयस्य महावाक्यार्थसिध्युपयोगित्वमात्रमेवाद्वैतिनामभिमतमिति न तस्य जिज्ञास्यत्वम् ।

"यतोवे"ति वाक्यबोधितं कारणत्वं जीवप्रधानादिव्यावृत्तमिति विनिर्णयो हि कारणवाक्येषु कुत्रापि पूर्वोत्तरसन्दर्भपर्यालोचनेन प्रमाणान्तरेण वा जीवप्रधानसाधारणं तन्नावगतमिति विवेकं विना न संभवतीति समन्वयाविरोधाध्याययोः "यतो वेति वाक्यबोधितकारणत्वविचारः क्रियत इत्यपि नानुपपन्नम् ।

अयमत्र निष्कर्षः—प्रधानादिव्यावृत्तस्वरूपं तटस्थलक्षणेन समर्प्यते असंकीर्णस्वरूपं स्वरूपलक्षणेनेति ब्रह्मवादिनोऽनुमन्यन्ते । तदिदमभिप्रेत्यैव खण्डनकारा वदन्ति—"अध्यारोपापवादन्यायेन निर्विशेषप्रतिपत्त्यर्थमेव तद्व्युत्पादनोपपत्तेरि"ति । अत्रचारोपनिमित्तमुपादानं चाद्वैतिनोऽज्ञानमेवानुमन्यन्ते । यत्तु प्रकाशप्रसरे—विश्वं यदि कल्पितं स्यात्, तर्हि अधिष्ठानसमसत्ताकत्वेषादिमत्स्यादिति कल्पकाभावादिना वस्तुन्यवस्त्वध्यासरूपाध्यारोपादेस्सोपपत्तिकं निराकृतत्वादिति—उक्तम्, तदिदमद्वैतसिद्धौ साधर्म्यसमजात्युत्तरत्वेन आरोप्यान्यूनसत्ताकत्वस्यैव दोषे विवक्षणीयत्वेनाधिष्ठानसमसत्ताकत्वस्याप्रयोजकत्वात् सर्वत्र चैतन्यस्यैवाधिष्ठानत्वेन कुत्रापि दोषस्याधिष्ठानसमसत्ताकत्वाभावेन च निरासितमिति नात्र किमपि वक्तव्यमस्ति ।

SGDF

नहि तरङ्गिण्यामपि भवदीयायां सर्वासामेवासां युक्तीनां खण्डनं कृतमिति स्पष्टमिदं तरङ्गिणीदर्शिनाम्। वनमालामिश्रोयं तु भवतां जडत्वनिरुक्तिपर्यन्तमेव लिखितमस्तीति बहुभिः कारणैर्वयं निश्चिनुम इति न्यायामृतानुवादमात्रं प्रकाशप्रसरकाराणामकिंचित्करमेव।

तथाच निर्विशेषब्रह्मप्रतिपत्त्यर्थतया कल्पितस्यापि कारणत्वस्य प्रधानादिव्यावृत्त्यर्थं लक्षणसूत्रे प्रकरणात्—"अप्रकृतकारणत्वविचारासांगत्यस्यावर्जनीयत्वादिति प्रकाशप्रसरोक्तमप्रयोजकं पश्यामः, किन्तु प्राधान्येनाविचारणीयमित्येव। एतेन सविशेषब्रह्मण इव कारणत्वस्यापि जिज्ञास्यत्वस्याऽऽवश्यकत्वादिति प्रकाशप्रसरापादनमिष्टापत्तिपराहतमेव।

"आनन्दो ब्रह्मे"ति वाक्यमात्रेण हि न निर्विशेषासंकीर्णस्वरूपस्य प्रधानादिव्यावृत्तस्य सिद्धिः स्यात्। लौकिकानन्दस्य आनन्दमयस्य जीवस्य आनन्दप्रकृतिसत्त्वगुणप्रधानप्रकृत्यादेर्वा वारणासंभवात्" इति शाखोपसंहारन्यायेन सर्वजीव-राशिकारणतया चेतनतया च ब्रह्मस्वरूपप्रतिपादनमवश्यमपेक्ष्यत एव। एतेन-कारणं ब्रह्मेत्यनुक्त्वाऽऽनन्दो ब्रह्मेति वक्तुं शक्यत्वेन निर्विशेषज्ञानार्थत्वस्याप्यसिद्धेरि"ति प्रकाशप्रसरोक्तम्—अपास्तम्। यथा-च स्थितिहेतुरन्यः स्यादिति शंकानिवारणार्थं स्थितिहेतुत्वविवक्षितमपेक्षितं वस्तुगत्या कारणत्वेन महावाक्यार्थान्वयायोग्यं च, तथा परिमलाद्यनुसारेण पूर्वमेव विवेचितम्। एतेन-स्थितिहेतुत्वाद्युपलक्षणान्तरवैयर्थ्याच्च कारणत्वस्य मुमुक्षुज्ञेयत्वाच्चेत्यादिप्र-

SGDF

काशप्रसरोक्तमप्यनवसरमेवेति खण्डनोक्तसिद्धान्तः सर्वथोपपन्न एव ॥९॥

[१०] देवस्येति वचनस्याद्वैतमतेऽविरोधोपपादनम् ॥

देवस्यैष स्वभावोऽयमिति वाक्यंतु अस्मद्भाष्यकारैर्गौडपादकारिकात्वेन संगृहीतम्। भवद्भाष्यकारैश्च श्रुतित्वेनेति सर्वविदितमिदम्। तत्र चन्द्रिकाकारैः प्रकाशप्रसरकारैर्वाऽद्वैतमतखण्डनावसरेऽद्वैतभाष्यकारपक्षमवलम्ब्यैव खण्डनं कर्तव्यं न स्वाचार्यसिद्धान्तावलम्बनेन। तथाचोक्तवचनस्य श्रुतित्वमनङ्गीकुर्वाणानामद्वैतसंप्रादायानुसारिणां तच्छ्रुतित्वपक्षस्वीकारेण खण्डनं न युक्तम्। तदिदमुक्तं खण्डने–"देवस्यैष स्वभाव" इत्यादेर्गौडपादकारिकात्वेनास्मन्माण्डूक्यभाष्ये व्याख्यातत्वेन श्रुतित्वासिद्धेरि"-ति। अत्रासिद्धेरित्येनेनोभयसंमतत्वाभावादिति वाऽस्मत्संमतत्वाभावादित्येव वार्थो विवक्षित इति न दोषः।

यत्तु प्रकाशप्रसरे—पदवाक्यप्रमाणविदामग्रेसरैरनन्तशाखाविद्भिरस्मद्भाष्यकारैः श्रुतित्वेन व्याख्यानादित्युक्तम्, तदिदं काकस्य स्वशिशुः स्वर्णशिशुरित्याभाणकसदृशं स्वाचार्यस्तुतिमेव गमयतीति नैतदस्माकं प्रतिकूलम्। अत्रानन्तशाखाविद्भिरितिविशेषणं यथार्थमिति वयमपि स्वीकुर्मः। यतोऽप्रसिद्धानेककाठरायणमाठरायणादिबहुशाखासंकलनं क्रियत इति। इदमेवात्र खण्डनकाराणां तात्पर्यं यत् प्रसिद्धश्रुतिषु नास्य श्रुतित्वं सिद्धमित्येवास्मदाचार्या मन्यन्त इति। विद्यारण्यादीनां गौडपादवचनेऽपि श्रुतित्वाभिमानो वर्तते भवदाचार्यवचने भवतामिवेति न दोषः।

अत्र श्रुतित्वाक्षेपकारणं तु खण्डनकाराणामिदमेव—यत् अस्मत्परमाचार्यवाक्येऽत्र देवास्येतिषष्ठ्यन्तस्यैष स्वभाव इति प्रथमान्तस्यच विद्यमानत्वेन वैयधिकरण्यात् कारणत्वं सुखमिव न स्वरूपं विवक्षितमिति । तथाच स्वभावपदेनासाधारणो धर्म इत्येव विवक्षितमिति न दोषः । तथाच श्रुतित्वमङ्गीकुर्वतां भवतामपि कारणत्वस्य ब्रह्मस्वरूपत्ववर्णनं न युक्तमिति सूचितम् । "आनन्दं ब्रह्मणो रूपमि"तितु न लक्षणवाक्यमिति षष्ठ्यन्तनिर्देशः कथमपि राहोः शिर इतिवदुपपद्यते एव । हरिवंशादौतु अयमेव श्लोको व्याख्यात इत्यत्र न वयं प्रमाणं पश्यामः । स्वयमेव बादरायणविरचिता एतत्समानार्थका एवैते श्लोका इत्येव कल्पना साधीयसी । एतेन भवदीयगरुडपुराणवचनमपि व्याख्यातम् । तत्र मन्त्रत्वव्यवस्थापनं स्तुत्यतिशयार्थमेव । सर्वथा चाद्वैतिमते यस्य श्रुतित्वं न सिद्धं तस्य श्रुतित्वव्यपदेशेन स्वसंप्रदायमात्रसिद्धेनाद्वैतमतनिरासोऽप्रयोजक इत्येव खण्डनकाराशय इति न किंचित् खण्डनोक्तमनुपपन्नं पश्यामः ॥१०॥

## स्वरूपलक्षणत्वव्यपदेशस्यौपचारिकत्वम् ॥

स्वरूपलक्षणत्वव्यपदेश औपचारिक एव । असंकीर्णस्वरूपावगत्युपायत्वमात्रेण तथा व्यपदेशादिति पूर्वमेव विवेचितमिति "असाधारणधर्मो हि लक्षणं परिकीर्तितम् । तच्च निर्धर्मकब्रह्मवादिनां युज्यते कथमिति" चन्द्रिकाक्षेपोऽनुक्तोपालंभनमेव । नहि स्वरूपस्यापि ब्रह्मधर्मत्वाङ्गीकारेण लक्षणत्वमद्वैतिनो मन्यन्ते । यदितु "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति

धर्मो अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते "इति पञ्चपादिकासिद्धान्तेन कल्पितेन भेदेन स्वरूपलक्षणत्वमङ्गीक्रियते, तदा न कोऽपि विरोधः। अतत्त्ववादिनोऽपि हि आनन्दकारणत्वादिकं ब्रह्मस्वरूपमपि लक्षणमित्यङ्गीकुर्वन्त्येव। तत्र यथा तेषां विशेषेणानुपपन्नेनापि निर्वाहः, एवमस्माकं कल्पितेन भेदेनेति समानम्। इयान् विशेषो यद्विशेषानुपपन्नत्वं दूषणम्, अस्माकं भेदानुपपन्नत्वं भूषणमिति। यथाच भेदप्रतिनिधिर्विशेषो भवतामप्रामाणिकस्तथा पूर्वाधिकरण एव विवेचितम्। नहि वयमपि लक्ष्यासंसृष्टधर्मं लक्षणं वदामः। एतेन—नच परमत इव लक्ष्यासंसृष्टो धर्मं इत्यादिप्रकाशप्रसरोक्तमपास्तम्। तथाच भवतामपि तटस्थस्वरूपलक्षणविभागस्य संमतत्वात् भवतां विशेषेणेवास्माकं भेदेन धर्मधर्मिभावनिर्वाहाद्यश्चोभयोरिति न्यायेन भवदीयं दूषणमप्रयोजकमिति। ॥११॥

## १२ लक्षणस्य व्यावर्तकत्वोपपत्तिः॥

लक्षणं हि द्विविधं स्वरूपलक्षणं तटस्थलक्षणं च। तत्र स्वरूपलक्षणस्यायोगव्यवच्छेदकत्वम्। सूचितं चेदं पूर्वं ब्रह्म ज्ञानं नवेत्यादिसंशयविरोधिज्ञानविषयत्वं ज्ञानादौ वर्तते इतिनिरूपणेन खण्डनकारैरपि। द्वितीयंतु अन्ययोगव्यवच्छेदकत्वेनेतरव्यावर्तकमिति खल्वद्वैतिनां मर्यादा। तच्च व्यावर्तकत्वं तटस्थलक्षणस्य सजातीयविजातीयजीवप्रधानव्यावर्तकत्वाद्वर्तत एव। एतेन—सजातीयविजातीययोरद्वैतमतेऽभावाल्लक्षणस्य व्यावर्तकत्वं न संभवतीति चन्द्रिकोक्तम्—परास्तम्। तटस्थलक्षणलक्ष्यं हि न पारमार्थिकं

SGDF Sri Gurgeshwari Digital Foundation

निर्गुणं किन्तु सगुणमेवेति ज्ञानबाध्यत्वस्य प्रधानादावभावात् न दोषः। एतेन—स्वलक्ष्यधर्मसमसत्ताकत्वे सति वस्तुतः सकललक्ष्येतरप्रतियोगिकस्वलक्ष्यसमसत्ताकव्यावृत्त्यनुमापकत्वरूपव्यावर्तकत्वस्य पृथिव्यादिलक्षणे गन्धादौ दर्शनेन भवदभिमते लक्षणे लक्ष्यज्ञानबाध्ये तद्विषमसत्ताके च तदभावेन च ग्रन्थकृदुक्तं दूषणं दुष्परिहरमेवेत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। नहि तटस्थलक्षणलक्ष्यं निर्विशेषचैतन्यम्, किन्तु तटस्थलक्षणलक्ष्यस्वरूपोद्देशेनानन्दवाक्यबोधितमेव तत्। अत एव "जगत्कारणं ब्रह्मानूद्यानन्दत्वविधानादि" त्यादिभामत्याद्युपपत्तिरिति न दोषलेशस्याप्यत्र प्रसरः।

यत्तु चन्द्रिकाखण्डने—कल्पितस्य सजातीयस्य विजातीयस्य च व्यावहारिकस्य सत्त्वेन तद्व्यावर्तकत्वेन लक्षणत्वोपपत्तेरित्युक्तम्, तस्याप्ययमेवाशयः। अनेनहि व्यावर्तनीयस्य प्रधानादेर्लक्ष्यसगुणब्रह्मसमसत्ताकत्वमेव बोध्यते इति न किंचिदवद्यम्। "वृक्षादेः स्वगतो भेदः पत्रमूलफलादिभिः। वृक्षान्तरात् सजातीयो विजातीयः शिलादितः। एवं सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते। ऐक्यावधारण द्वैतप्रतिषेधैस्त्रिभिः क्रमादि"त्यस्मत्प्राचीनाचार्यवचन"मेकमेवे" ति श्रुत्यर्थनिर्णायकं निर्विशेषचैतन्यविषयं नतु कारणवाक्यपरमिति नानेनास्य व्यावर्तकत्वसिद्धान्तस्य व्याहतिः। एतेन—त्वत्पूर्वाचार्यवचनेन सजातीयविजातीयान्यावृत्तेर्निषेधात् पुनरत्र तदङ्गीकारेऽपसिद्धान्त इति प्रकाशप्रसरोक्तमनुक्तोपालंभनमिति—सू सर्वथाचा सर्वाकुसु-चितम्।

SGDF Sri Gargeshwari Digital Found

न्दरस्याद्वैतमतस्यानवद्यस्य सर्वावद्यनिदानत्वं प्रकाशप्रसरापादितं तत्रानवकाशं स्वमतमेव विषयीकरोतीत्यलं विस्तरेण ॥

## [१३] परमते कारणत्वलक्षणत्वानुपपत्तिः ॥

केचित्तु इत्यादिखण्डनग्रन्थे हि जन्मादिकारणत्वस्य यच्छन्दत्रयेण प्रत्येकलक्षणत्वसमर्थनं कृतमिति तदुपपादकतया "यत्र नान्यदित्यपि व्यधिकरणदृष्टान्ततया स्वीकृतमिति तल्लक्षणस्य दहराकाशानतिप्रसक्तत्वनिरूपणं क्रियत इति नायं ग्रन्थः प्रकृतानुपयुक्तः। एतेन—केचित्तु इत्यादि दहराकाशस्याल्पत्वासिद्धेरित्यन्तं प्रकृतानुपयुक्तमित्युपेक्षितमिति प्रकाशप्रसरोक्तमपास्तम्।

अत्रेदं विचारणीयम्—चन्द्रिकाकारैरद्वैतमते यानि दूषणानि प्रतिपादितानि तानि सर्वाण्यपि तन्मतेऽपि प्रसज्यन्ते वा न वेति। तत्र कारणत्वं ब्रह्मस्वरूपलक्षणमिति यत्तेषां मतम्, तदिदं लक्ष्यगतत्वं तन्मतेऽपि कारणत्वस्य ब्रह्मण्यसंभवान्नोपपन्नम्। अद्वैतमते सत्यादिस्वरूपलक्षणव्यपदेश औपचारिक इति वा कल्पितेन भेदेन धर्मधर्मिभावेन वा यथा निर्वाह एवं तेषामपि विशेषेण निर्वाह इति कल्पनं न संभवति। भेदानुपपत्तौ विशेषस्यापि प्रतिनिधेः कल्पनं न संभवतीति प्रथमसूत्र एव विवेचितम्। एतेन—भेदप्रतिनिधिना विशेषेण लक्ष्यलक्षणभावस्य पूर्वमेवोक्तत्वात् इत्यादिप्रकाशप्रसरोक्तम्—अपास्तम्।

अयं भावः—येन विशेषेण भवद्भिरभिन्नानां भेदव्यवहारोपपत्तिः क्रियते सोऽपि हि भवतां ब्रह्मरूप एव खल्वङ्गीक्रियते। तथाच विशेषे विशेषान्तरमपि भवद्भिरङ्गीक्रियते वा नवेति विचा-

SGDF
Sri Gurgeshwara Digital Foundation

रणीयम्। आद्येऽनवस्था। द्वितीयेतु ब्रह्मबलात् ब्रह्मस्वरूपलक्षणं कारणत्वमिति पय वस्यति। न हि स्वस्यैव स्वभेदव्यवहारप्रयोजकत्वं संभवति। एतेन—स्वाभिन्नेऽपि स्वाश्रयत्वसंपादकत्वेन विशेषस्य सिद्धत्वेन विशेषे विशेषान्तराभाव आधारभूतविशेषमात्रबलेनैव भेदकार्यनिर्वाहसंभवादु इति प्रकाशप्रसरोक्तम्—अपास्तम्। नहि स्वस्यैव स्वभेदकार्यनिर्वाहकत्वं कुत्रापि दृष्टचरम्। अन्यथा ब्रह्मण एव स्वव्यवहारप्रयोजकत्वसिद्ध्या विशेषाङ्गीकार एव वितथ आपद्येत। अस्मन्मते त्वज्ञानस्याऽऽनन्दब्रह्मभेदव्यवहारप्रयोजकत्वान्न दोषः। यथाचास्मन्मत आनन्दत्वं न स्वरूपलक्षणं किन्त्वानन्द एव, तथा पूर्वमेव विवेचितम्।

एतेन—भवन्मत आनन्दरूपेऽकल्पिते ब्रह्मणि कारणत्वस्येव कल्पितस्यानन्दत्वस्यापि कल्पितत्वेन कल्पिताकल्पितयोरभेदस्य कल्पनीयत्वादिति प्रकाशप्रसरोक्तम्—अपास्तम्। नहि वयमानन्दत्वब्रह्मणोर्भेदं कल्पयामः किन्तु आनन्दब्रह्मणोरिति कल्पिताकल्पितभेदो ह्यत्र नाद्वैतिभिरूरीकृतः। "नह्यद्वैतिनामानन्दरूपस्य ब्रह्मण आनन्दत्वब्रह्मत्वाभ्यामिव कल्पितो भेदो माध्वैरङ्गीक्रियते" इति खण्डनवाक्यस्याप्ययमेवाशयः। इदं हि वर्णनं खण्डनकाराणां माध्वमते स्वरूपलक्षणत्वनिर्वाहो न भवतीति निरूपणार्थमिति बालिशोऽपि जानाति। एतेन—आनन्दस्यैव लक्षणत्वाङ्गीकारे तस्य प्रकृतानुपयुक्तत्वाच्चेति प्रकाशप्रसरोक्तम्—अपास्तम्।

यत्तु चन्द्रिकाखण्डने कर्तृत्वस्य ब्रह्माभिन्नतया नित्यत्वात् "तेजोऽसृजत" ति श्रुत्युक्तमागन्तुकं कर्तृत्वं कथं सङ्गच्छते? कारण-

SGDF Sri Gargeshwari Digital Foundation

त्वस्य शक्त्यात्मना नित्यत्वेऽपि व्यक्त्यात्मनाऽऽगन्तुकत्वमव्यसत्। व्यक्त्यात्मनाऽपि कारणत्वस्य ब्रह्माभिन्नतयोक्तदोषात्" इति वर्णितम्, तत्र प्रकाशकारा एवं वदन्ति—"सिद्धान्ते तत्तत्कार्यजननशक्तिरेव क्रियेत्युच्यते। अतः शक्तिरूपेण स्थिरा सा यदा व्यज्यते, तदा व्यवहारालंबनं तत्तत्कार्यजननी च भवति। शक्तेर्व्यक्तिर्नामावस्थाविशेषः। व्यक्तिरूपत्वं शक्तिरूपत्वं चेति क्रियाया द्विरूपत्वात् क्रियारूपो विशेषः स्थिर इति युक्तम्। शक्तिरूपत्वेन स्थैर्यस्य कदाचित्तद्व्यक्तिरूपतामादाय बाधकपरिहारसंभवात्--इति। एतावता हि व्यक्तिरूपेण कर्तृत्वस्य ब्रह्माभिन्नत्वं नास्तीत्येव निरूपितम्। तथाच विश्वकर्तृत्वं ब्रह्मणोऽसाधारणलिङ्गतया स्वरूपलक्षणतया च विवक्षितम्। यदि सामर्थ्यरूपमेव, तर्हि कथं वा "तदैक्षत"इत्यादीनां स्वरूपलक्षणपरत्वम्? यत्तु प्रकाशप्रसरे—"व्यक्तेरपि भक्तेष्टसंपादनानुकूलत्वादिरूपावान्तरानेकविशेषाङ्गीकारादि"त्युक्तम्, तेनानेकपदार्थकल्पनं स्वमते स्पष्टमेवांगीकृतम्, विशेषस्य भेदप्रतिनिधिरूपस्येव प्रकारान्तररूपस्यापि स्वीकारः क्रियते इति कति वा कल्पना भवन्तोऽप्रामाणिका ऊरीकुर्वन्तीति भवन्त एव विजानन्तु।

यत्तु खण्डने—प्रथमाधिकरणे एकेन ब्रह्मपदेन बहूनां लिङ्गानामन्यथानयनम्, अत्र बहुभिर्लिङ्गैरेकस्य ब्रह्मपदस्यान्यथानयनमिति पूर्वापरविरोध इति—वर्णितम, तस्यायमाशयः—पूर्वाधिकरणे हि ब्रह्मपदस्य गुणपूर्णपरत्वं सिद्धवत्कृत्व खलु पूर्वपक्षनिरासः कृतः। तथाच तत्रैव यदि तस्य तदर्थत्वं निर्णीतं तर्हि तदधिक-



SGDF
Sri Gurgaon... Digital Forum

रणवैयर्थ्यमपरिहरणीयम् । यदि तु न तदर्थत्वं निर्णीतम्, तर्हि कथं वा सन्दिग्धार्थेन ब्रह्मपदेनैकेन बहूनां लिङ्गानां बाधनं भवतीति न सिद्धान्तसिद्धिः स्यादिति निर्णीतार्थत्वमेव ब्रह्मपदस्यावश्यमूरीकरणीयमिति निर्णीतार्थत्वमेकस्य पदस्य पूर्वमुक्त्वा पुनरधिकरणान्तरे तस्यैव सन्दिग्धार्थत्ववर्णनं पूर्वापरविरुद्धमेवेति । "विचारविधायकनानावाक्येषु ओंब्रह्मात्मनारायणादियौगिकशब्दानां सहस्रशः सत्त्वेन ब्रह्मशब्दस्य तादृशानेकश्रुतिसध्रीचीनत्वात् गुणपूर्त्यर्थकेन ब्रह्मशब्देन विषयसिद्धिं वदता सूत्रकृता श्रुत्यनुभवानुमानानां भेदप्रापकत्वस्य प्रागुक्तदिशोक्तत्वात्" इत्यादिप्रकाशप्रसरोक्तमपि हि पूर्वाधिकरणे गुणपूर्त्यर्थकं ब्रह्मपदमिति कृत्वैव प्रवृत्तमिति गमयति । तथाचोक्तप्रकाशप्रसरेणापि पूर्वापरविरोध एव दृढीकृतः, न तत्परिहारलेशोऽपि संपादित इत्यहो कष्टमापतितं यत् भक्ष्याशया हि मञ्जूषां दष्ट्वाऽऽखुस्तेन भक्षितः । नह्यत्र खण्डनकाराः पूर्वाधिकरणेऽद्वैतवाक्यबाधकत्वमुक्त्वाऽत्राधिकरणेऽद्वैतवाक्यैर्ब्रह्मपदार्थनिर्णयः क्रियते इति पूर्वापरविरोधं मन्यन्ते, किन्तु पूर्वाधिकरणे सन्दिग्धार्थत्वं ब्रह्मशब्दस्य नास्तीति निरूप्यात्र तद्विरुद्धं निरूप्यत इत्येव । "अत्र ह्यधिकरणे ब्रह्मशब्दस्य रूढ्या जीवपरत्वमङ्गीकृत्य तदनुसारं यतोवेत्यादीनां योजनं क्रियते पूर्वपक्षे, सिद्धान्ते तु मुक्तप्राप्यत्वविश्वकर्तृत्वादिलिङ्गैर्ब्रह्मशब्दरूढिर्बाध्यते इति च सर्वविदितम् । एवंच—"योगरूढिभ्यां ब्रह्मणि सावकाशस्यैकस्य ब्रह्मशब्दस्य जीवे निरवकाशानेकलिङ्गश्रुतिबाधकत्वाभावस्यास्मिन्नधिकरण उक्तत्वादिति प्रकाशप्र-

SGDF Sri Gargeshwari Digital Foundation

सरवाक्यं तेषामेव तन्मतस्वरूपाज्ञानं गमयति । इदंहि पूर्वपक्ष-
दिशा वोत सिद्धान्तदिशा वा । आद्ये ब्रह्मपदस्य रूढ्या जीवपरत्वात्
ब्रह्मणि सावकाशस्य ब्रह्मपदस्येत्यनुपपत्तिः । द्वितीये ब्रह्मलिंगै
रूढिबाधस्यैवात्र कृतत्वेन जीवलिङ्गबाधकत्वाभावस्यानुक्ततया
विरोधः । तथाच पूर्वाधिकरणे सावकाशाद्वैतवाक्यबाधकत्वं
ब्रह्मशब्दस्यात्र निरवकाशब्रह्मलिङ्गबाध्यत्वं ब्रह्मशब्दस्येति विशेषे
सत्यपि पूर्वोक्तप्रकारेण विरोधोऽपरिहरणीय एव । यथाचाद्वैत-
वाक्यानां न्यायामृतोक्तं सावकाशत्वमपि बाधितमप्रामाणिकं च
तथाऽद्वैतसिध्यादौ व्यक्तम् । एतेन—अद्वैतवाक्यानां सावकाश-
त्वस्य न्यायामृतादौ स्पष्टत्वादिति प्रकाशप्रसरोक्तमपि—परास्त-
म् । सर्वथातु जन्माद्यधिकरणमिदं श्रीमध्वसंप्रदायानुसरणे व्यर्थ-
मनुपपन्नं च भवति । अद्वैतमतानुसरणे सार्थकमुपपन्नं सर्वाङ्ग-
सुन्दरं च भवतीति सिद्धम् ॥१३॥

इति जन्मद्यधिकर



SGDF
Sri Gangeshwari Digital Foundi

# अथ शास्त्रयोनित्वाधिकरणम्

## शास्त्रयोनित्वात्

इदं हि सूत्रं वेदस्यापि ब्रह्मकार्यत्वमिति बोधनाय प्रवृत्तमित्यद्वैतिनां प्रथमं वर्णकम्। तत्र चन्द्रिकाकारा वदन्ति—लक्षणानन्तरमवश्यापेक्षितप्रमाणपरत्वसंभवेऽस्य सूत्रस्यान्यपरत्वायोगादि"ति। अत्र रघुनाथसूरयः स्वीये शंकरपादभूषणे—ब्रह्मणः सर्वज्ञत्वासंभवान्निरुक्तजगत्कर्तृत्वमसंभवीति लक्षणासंभवाशंकायां असंभवग्रस्ते लक्षणे प्रमाणाभिधानमनवसरम्; पूर्वसूत्र एव "यतो-वेति" श्रुतिरूपप्रमाणस्यापि निर्देशेन नह्यत्र प्रमाणाकांक्षाऽपि वर्तते। त्वयापि हि शिवाद्यतिव्याप्तिवारणार्थमेवेदं सूत्रमिति वर्णितम्, नतु प्रमाणाकांक्षया सूत्रमवतारितमिति–निरूपयन्ति॥ युक्तं चैतत्-यथाहि चोदनालक्षणोऽर्थो धर्म इति सूत्रमेव धर्मे लक्षणं प्रमाणमुभयं च गमयतीति मीमांसका मन्यन्ते, एवमत्रापि ब्रह्मणो वेदैकसमधिगम्यस्य लक्षणं प्रमाणमुभयंच "जन्माद्यस्य यत" इति सूत्रेणैव गम्यत इत्येव हि वर्णनं युक्तम्। अन्यथा कथं वा भवतामपि "जन्माद्यस्य यत "इति सूत्रं गुणपूर्णादिभगवत्स्वरूपलक्षणकं भवेदिति भवन्त एव विचारयन्तु। "वेदान्तकुसुमग्रथनार्थत्वात् सूत्राणाम्" इति वर्णयतां भगवत्पादानामप्ययमेवाशयः। "चोदनालक्षण" इतिवत् शास्त्रलक्षणत्वादित्यसूत्रणेन "शास्त्रयोनित्वादि"ति योनिपदप्रयोगेणाऽपि सूत्रकारोऽत्र शास्त्रकारणत्वमेव ब्र-

SGDF Sri Gangeshwari Digital Foundation

ब्रणोऽत्र सूचयंति, नतु तत्प्रमाणकत्वम्। तदुक्तं खण्डने—भूत-येनिमि" त्यादाविव जन्मसूत्रसमभिव्याहारात् शास्त्रयोनिशब्दस्य कारणपरत्वमेव युक्तम्,नतु प्रमाणपरत्वम्, काप्यप्रयोगात्—इति। तथाच लक्षणप्रमाणयोरुभयोरपि पूर्वसूत्र एव निर्देशादत्र वेद-कर्तृत्वेन विश्वकर्तृत्वाक्षेपः क्रियत इत्येव सङ्गतम्। चन्द्रिकादि-मतेऽपि नेदं प्रमाणप्रदर्शनपरम्, किन्तु अतिव्याप्तिनिरासेन पूर्वोक्त लक्षणसमर्थनपरमित्येवाङ्गीक्रियते।

यद्यपि तैः—पाशुपताद्यागमप्रामाण्येन पूर्वपक्षः, तदप्रामा-ण्येन च सिद्धान्त इति शास्त्रप्रमाणकत्वमेव व्यवस्थाप्यते, तथा-पि तन्मते पूर्वसूत्रेणैव मुक्तप्राप्यत्वादिना हरिहरहिरण्यगर्भादिव्या-वृत्तेरपि सिद्धत्वेनैतदधिकरणवैयर्थ्यमपरिहरणीयमेव। एतेन—कारणत्वमनुमानादिना शिवादावपि सुसाधमित्यतिव्याप्तिशंकायां सूत्रोक्तकारणत्वसंरक्षणाय शास्त्रैकसमधिगम्यत्वेनानुमानाद्यगो-चरत्वान्नातिव्याप्तिरिति सिद्धान्तयितुं लक्षणतयोक्ते कारणत्वे शास्त्रप्रामाण्यस्यादावेव वक्तव्यत्वात्प्रथममेव प्रमाणपरत्वं व्यु-त्पादनीयमिति प्रकाशप्रसरोक्तं—परास्तम्। पूर्वाधिकरण एव—"अस्यानुवादकत्वेऽपि "शास्त्रस्था वा तन्निमित्तत्वादि"ति न्यायेन भाष्योक्तश्रुतिप्राप्तकारणपरत्वादि"ति चन्द्रिकायामानुमानिककार-णत्वग्रहणनिरासेन पुनरत्रानुमानेन पूर्वपक्षस्यैवानुदयात्। अन्यथा कथं भवतां पूर्वाधिकरणसिद्धान्तसिद्धिरिति भवन्त एव विवेचय-न्तु। श्रुतिविरुद्धस्मृत्यप्रामाण्यं पाशुपतपांचरात्राद्यप्रामाण्यं च "शिष्टाकोपेऽविरुद्धमपी"त्र "शास्त्रपरिमाणत्वादि"त्यत्र भट्टपादैरेव

SGDF
Sri Gangadharan Digital Foundation

व्यवस्थापितमिति नात्र तदप्रामाण्यनिरूपणं पुनरप्यपेक्षितम्।

यत्तु प्रकाशप्रसरे—मानत्वादिति वाच्ये योनिपदप्रयोगेण शास्त्रजन्यत्वात् ज्ञानस्य प्रमाणत्वमेवेति सूचनमिति—वर्णितम्, तत्रेदमेव वक्तव्यम्—यत् शास्त्रपदप्रयोगः खलु भवदभिमतरीत्याऽपि मानताध्रौव्यं सूचयति,न योनिपदमात्रम्। तथाच शास्त्रमानत्वादिति वर्णने स्पष्टमेव मानताध्रौव्यं विवेचितं स्यादिति योनिपदस्वारस्यमद्वैतमत एव वर्तते, न माध्वमते। यत्तु प्रकाशप्रसरे-शास्त्रयोनित्वादित्यत्र योनिपदस्य लाक्षणिकत्वपरिहारार्थं एकज्ञप्तिपदयोरपि मध्ये योजनं कृतम्, तदिदं सूत्रकाराणां सूत्ररचनाऽकौशलं गमयति। कथं वा तत्र शास्त्रपदस्यैव शास्त्रैकज्ञप्तिरूपार्थलाक्षणिकता च न भवतीति "शुष्के पतिष्यन् पङ्के निमग्न" इति न्याय एवात्र प्रसरति। सर्वथातु नाद्वैतमतमवद्यम् ॥१॥

## [२] विश्वकर्तृत्वेन सर्वज्ञत्वाक्षेपोपपत्तिः॥

जन्मादिसूत्रे कारणत्वं ब्रह्मणो यद्वर्णितं तदिदमभिन्ननिमित्तोपादानत्वरूपं नाधिष्ठानत्वमात्रम्। तथाच कर्तृत्वमपि ब्रह्मणो विवक्ष्यते। अतत्त्ववादिनोऽपि हि अधिष्ठानत्वे विवदमाना अपि न कर्तृत्वे विवदन्ते। तदुक्तम्—"विश्वकर्तृत्वमुच्यते" इति। तेनच कर्तृत्वेन सर्वज्ञत्वं सर्वशक्तित्वञ्चार्थसिद्धमिति तेषामपि संमतम्। नहि वयमप्यधिष्ठानत्वेन सर्वज्ञत्वमर्थसिद्धमिति वदामः, नवा निर्विशेषं ब्रह्मैवात्र विवक्षितम्। "यतोवे" त्यवान्तरवाक्यं सविशेषपरमिति ह्यस्मदीयसिद्धान्तः।

SGDF Sri Gurgeshwari Digital Found

अतएवोक्तंसूत्रे परिमले—ननु निर्विशेषब्रह्मविचारं प्रतिज्ञातवतः सूत्रकारस्य सविशेषब्रह्मगतसर्वज्ञत्वदृढीकारणं क्वोपयुज्यते ? इति शंकाग्रन्थ उपपद्यते। एतेन—"भामत्यां"कारणत्वद्वारा सूत्रस्य निर्विशेषब्रह्मस्वरूपलक्षणप्रदर्शनपरत्वस्योक्त्या कारणत्वस्योपहितवृत्तित्वेन शाखाग्रस्येव तत्तटस्थलक्षणत्वानुपपत्त्या च सकललक्ष्येतरव्यावर्तकजगद्भ्रमाधिष्ठानत्वरूपनिर्विशेषसाधारणलक्षणपरत्वस्यैव युक्तत्वादि"ति प्रकाशप्रसरोक्तं विप्रलंभमूलकमनवसरं चेति—सूचितम्। नहि भामत्यां सूत्रस्य कारणत्वद्वारा स्वरूपलक्षणप्रदर्शनपरत्वं कुत्राप्युक्तम्। यद्यपि परिमले स्वरूपलक्षणमपि "यतोवे"तिवाक्यमूलमित्युक्तम्, तथापि "यतोवे"ति श्रुतिवाक्यमूलत्वमेव तत्र वर्णितं न सूत्रमूलत्वम्। यदपि "यतोवे" तिवाक्यमूलत्वं स्वरूपलक्षणस्य वर्णितम्, तदपि तस्यावान्तरवाक्यत्वाभिप्रायेणैव। अत एव परिमले—तदुपष्टंभकतया—तदुक्तम् "जगत्कारणमनूद्य हि तस्यानन्दत्वविधायकमि"ति कल्पतरुवाक्योपन्यास उपपद्यते। तथाच"यतो वे"ति वाक्येनोपहितस्यैव लक्षणं तटस्थलक्षणाभिधं विवक्षितमिति न निर्विशेषसाधारणलक्षणपरत्वमावश्यकमिति सिद्धम्। यत्तु खण्डने—ब्रह्म च वक्ष्यमाणलक्षणमित्यद्वैतभाष्यग्रन्थेनोपहितस्यैव जिज्ञास्यत्वोक्तेरि"-त्युक्तम्, तस्याप्ययमेवाशयः—कारणत्वादिना विचार्यं हि सविशेषमेवेति। तच्च सविशेषमवान्तरतात्पर्यविषय एवेति पर्यवसितं तात्पर्यं निर्विशेष एव वर्तत इति चाभिप्रायेणैव जिज्ञास्यब्रह्मणो निर्विशेषत्वं सविशेषत्वं चोभयं खण्डनकारैस्तत्र तत्र निरूपितम्।

SGDF Sri Gangeshwari Digital Foundation

उभयविचार्यतायामपि कारणत्वादिविचार्यत्वस्य सविशेष एव वर्तमानत्वादुपहितस्यैव जिज्ञास्यत्वोपपत्तिरित्यवधारणं खण्डनकाराणां नानुपपन्नम् । एतेन—उपहितस्यैव जिज्ञास्यत्वोक्तेः पूर्वापरविरोधेनायुक्तत्वादिति प्रकाशप्रसरोक्तमपि—परास्तम् । तदिदं सिद्धम्—"भवदभिमतभ्रमाधिष्ठानत्वरूपकारणत्वेन ब्रह्मणः सार्वज्ञासिद्धेरि"ति चन्द्रिकोक्तिरनुक्तोपालंभनमेवे"ति। सविशेषस्य च जिज्ञास्यत्वं न स्वभावतः, किन्तु अवान्तरतात्पर्यविषयतयैवेति—"मिथ्याभूतस्योपहितस्य स्वभावतो जिज्ञास्यत्वायोगात्"इति प्रकारप्रसरोक्तमप्यनवसरमेवेति सर्वमनवद्यम् ॥२॥

[३] अर्थसिद्धसर्वशक्तित्वार्थ सूत्रान्तररचनानुपयोगः ॥

सर्वज्ञत्वमिव सर्वशक्तित्वमप्यर्थसिद्धं चेदपि तदर्थं न पृथक्सूत्रान्तररचनापत्तिरिति शंका तु चन्द्रिकाकाराणां तदैवावसरेत्, यदि तदपि न द्रढीकृतम् । परिमले हि तदप्युक्तसूत्रेण द्रढीकृतमेवेति निरूपितम् । तदुक्तम्—"ननु पूर्वसूत्रे ब्रह्मणः सर्वज्ञत्ववत् सर्वशक्तित्वमप्यर्थलभ्यम् । तत्किमिति केनचिद्धेतुना न द्रढिकृतम् ? तदप्युक्तशंकानिवारणक्षमम्, सत्यम्, तदपि निश्वसितश्रुत्युदाहरणेन द्रढीकृतमेव । "अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो-यजुर्वेद"इत्युपक्रम्य "अयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्वसितानीति नामरूपात्मकस्य सर्वस्यापि प्रपंचस्य निःश्वसितवदप्रयत्नसाध्यब्रह्मकार्यत्वोक्तेरि"ति ।

एतेन-जन्मसूत्रेऽर्थसिद्धस्य सार्वज्ञस्य स्फोरणार्थं शास्त्रयोनिसूत्रवत् कारणत्वेनाक्षिप्तसर्वशक्तित्वस्फोरणार्थं सूत्रान्तरमपि स्या-

SGDF
Sri Gurgeshwari Digital Foundation

दिति चन्द्रिकोक्तम्—अपास्तम्। इदं हि दूषणमद्वैतसंप्रदायाऽबोधविजृंभितमेव। किं बहुना? "निरतिशयं सर्वज्ञत्वं सर्वशक्तिश्चे"ति भाष्यकारैरेव स्पष्टमेव सर्वशक्तित्वमप्यर्थसिद्धमत्र दृढीकृतमेवेति सूच्यत इत्यनुक्तोपालंभनमेवेदम्। सर्वज्ञत्वं येन वाक्येन गम्यते तेनैव सर्वशक्तित्वमपि गम्यत इत्युक्तश्रुतिपर्यालोचनेन स्पष्टमेव प्रकाशते। तदिदमभिप्रेत्यैव खण्डनेऽप्युक्तम्—सर्वज्ञत्वदृढीकारेण तत्समनियतसर्वशक्तित्वस्यापि दृढीकृतप्रायत्वादि"ति। उक्तश्रुतौच प्रथमतः शास्त्रयोनित्वमनन्तरं भूतयोनित्वं च बोधितमिति"शास्त्रयोनित्वादि"ति प्रथमतः सार्वज्ञस्फोरणमप्युपपन्नमेव। एतेन—"मुखतः सार्वज्ञस्यैव स्फोरणे निमित्ताभावात् सर्वशक्तित्वदृढीकारे तत्समनियतसार्वज्ञस्यापि दृढीकृतप्रायत्वात्" इति प्रकाशप्रसरोक्तम्-अपास्तम्। यत्तु चन्द्रिकायां-पूर्वसूत्रेऽर्थलब्धसर्वशक्तिपरित्यागेन सार्वज्ञस्यैव स्फोरणे निमित्ताभावादित्युक्तम्,तत्र यदि सर्वशक्तित्वमेव सूत्रणीयमिति विवक्षितम्, तर्हि सार्वज्ञपरित्यागेन सर्वशक्तित्वस्यैव सूत्रणे निमित्तमेकं वर्णनीयम्, तत्तु चन्द्रिकायामपि नोक्तमित्युभयसूत्रणं कर्तव्यमित्येव चन्द्रिकाशयो वर्णनीय इत्येकेन सूत्रेणोभयसूचनाऽसंभवात् सूत्रद्वयापत्तिरेव चन्द्रिकार्थो वर्णनीयः। इदमेवाभिप्रेत्य खण्डनकारैः—सूत्रान्तरमपि स्यादिति" चन्द्रिकानुवादः कृतः। एतेन—सूत्रान्तरमपि स्यादिति चन्द्रिकायामनुक्तत्वेनाविद्यमानानुवादेनानुक्तोपालंभनत्वाच्चेति वदन्तः प्रकाशप्रसरकाराः चन्द्रिकाऽर्थज्ञानविधुरा इति सूचितम्। सर्वथातु नाद्वैतमतं दुरवगाहं खण्डनमर्हतीति सिद्धम्॥३॥

SGDF
Sri Gurgaonwari Digital Foundation

## [४] जन्मादिसूत्रे प्रधानवादमात्रानिरासः

अत्रच सर्वज्ञत्वदृढीकारो यः कृतः न स सांख्यमतनिरासार्थः। न हि जन्मादिसूत्रेण प्रधानकारणवादनिरासमात्रं विवक्ष्यते, किन्तु जीवकारणतानिरासोऽपि। अतएव हि—"न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरं मुक्त्वाऽन्यतः प्रधानादचेतनादणुभ्योऽभावात् संसारिणो वोत्पत्त्यादि संभावयितुं शक्यमि"ति भाष्ये संसारिणोऽपि ग्रहणमुपपद्यते। ब्रह्मविद्याभरणे तु प्रधानादित्यादि दृष्टान्तार्थं संसारिण इति प्रकृताभिप्रायमिति जीवकारणत्वमात्रमेवात्र निरस्यतया विवक्ष्यत इति वर्णितम्। सर्वथातु सर्वज्ञत्वदृढीकरणमत्र जीवकारणतावारणार्थमेव विवक्षितमित्यत्र न विशयलेशोऽपि। तदुक्तं परिमले—"पूर्वसूत्रे विवक्षितस्य जीवो जगत्कारणमिति शंकाव्यावर्तनस्य स्थिरीकरणे सर्वज्ञत्वदृढीकरणमुपयुज्यते" इति। एतेन—सांख्याभिमताचेतनकरणत्वस्य चेतनत्वमात्रेण निषेधसंभवे सांख्यानङ्गीकृतशास्त्रयोनित्वेन सार्वज्ञसाधनमयुक्तमिति चन्द्रिकोक्तिरद्वैतसंप्रदायानबोधविजृंभितेति-सूचितम्

तदुक्तं खण्डने—प्रधानकारणत्वनिरासार्थत्वमात्रकल्पनस्यास्मद्भाष्यरीतिविरुद्धत्वात् इति।

यत्तु प्रकाशप्रसरे—जगत्कारणत्वं प्रधानादिव्युदासेन ब्रह्मण्येव साधयितुं हेतुत्वेनोक्तं शास्त्रयोनित्वेन साध्यत इत्येव त्वद्व्याख्याभिप्रायो वक्तव्यः, अन्यथा नह्यल्पज्ञस्यैवंविधं विश्वनिर्माणं शक्यमिति प्रागुक्तकारणत्वस्यैवासिद्धिप्रसंगात्। भामत्यां—

SGDF
Sri Gangeshwari Digital Foundation

परिमितज्ञानशक्तेः ज्ञातुं कर्तुं वाऽशक्तेश्च" त्युक्तेश्च। तथाच तादृशकारणत्वं न प्रधानादौ, किन्तु ब्रह्मण्येवेति साधनाय शास्त्रयोनिसूत्रं प्रवृत्तमिति सार्वज्ञस्य सांख्यं प्रत्येव विप्रतिपन्नत्वात्तन्निराकरणमेवात्र क्रियते इति—वर्णितम्, तदिदं स्वसंगृहीतभाष्यभामत्यादिवाक्येष्वपि जीवस्यैवादिशब्देन परामर्शनीयत्वात्, अल्पज्ञत्वस्यापि सांख्यमतेऽनङ्गीकारेण तन्निराकरणपरतयोक्तसूत्रयोजनस्य सांख्यादिसंप्रदायाज्ञानमात्रविजृंभितत्वात् पूर्वोक्तरीत्या परिमलाद्यनुसारेण जीवकारणताव्यावर्तनदृढीकरणस्यैवात्र विवक्षितत्वाच्चाकिंचित्करम् ॥ जीवकारणतानिरासश्च न चेतनत्वमात्रेण भवति, किन्तु सार्वज्ञदृढीकरणेनैव। समतं चैतदतत्त्ववादिनामपि यज्जन्मादिसूत्रे जीवनिराकरणमेव क्रियत इति। नहि प्रधाननिराकरणं सर्वज्ञत्वेनैव कर्तव्यम्। यत्तु प्रकाशप्रसरे--एवंच प्रधानकारणतानिरासार्थत्वाभावे सार्वज्ञदृढीकरणार्थत्वस्यैवोक्तरीत्याऽयोगादित्यादि उक्तम्, तदिदं तैरेव चेतनत्वमात्रेणैव प्रधाननिराकरणार्थत्वसंभवस्य प्रतिपादितत्वात् पूर्वोत्तरविरुद्धम्। अत्रच संसारिपदेन हिरण्यगर्भो विवक्षित इति हिरण्यगर्भकारणतावादस्यापि वेदमूलत्वात् न कोऽपि दोष इति सर्वमनवद्यम् ॥४॥



SGDF
Sri Gangeshwari Digital Foundation

## [५] शास्त्रयोनित्वेन सर्वज्ञत्वसाधनानुपपत्तिनिरासः ॥

यथाच जगत्कारणत्वापेक्षया शास्त्रकारणत्वं सार्वज्ञस्य विशेषतो निश्चायकं तथा पूर्वमेव विवेचितम् । एतेन-"पूर्वसूत्रोक्तकारणत्वातिरिक्तं मानान्तरमत्र नोक्तमिति निश्चितप्रमाण्यकज्ञान-विषयत्वरूपदार्ढ्यसंपादकत्वायोगादि"ति प्रकाशप्रसरोक्तम्–अपास्तम् । पूर्वसूत्रे"अस्येत्यस्य यतोवेतिवाक्यगमिमानिपदाभिधेयमर्थः, तच्च भूतानिपदसमभिव्याहृतमुत्पद्यमानतया प्रत्यक्षविषयघटादि-पदार्थजातमेव, नतु भगवन्निश्वसितं वेदः । उक्तं हि न्यायरत्नावल्याम्—"अत्र भूतानीत्युक्तत्वादनादिपदार्थव्यवच्छेद" इति । एतेन—पूर्वसूत्रेऽस्येत्यनेन वेदस्यापि परामर्शेन वेदकारणत्वस्यापि ग्रहणेन तेनैव तस्य स्फुटीकरणसंभवादिति प्रकाशप्रसरोक्तम्-अपास्तम् । शास्त्रयोनित्वं हीदं सर्वविद्यास्थानसर्ववेदोपदेष्टृत्वमेवेति न शास्त्रोपादानगोचरापरोक्षज्ञानवत्त्वमात्रसाधकं प्रकाश-प्रसरोक्तरीत्येति सर्वं सुस्थम् ॥ पूर्वसूत्रे जगत्कारणत्वेन यत् जगदुपादानगोचरज्ञानवत्त्वं बोधितं तेन तदुपादानातिरिक्तगोचरज्ञान-वत्त्वमपि साधितमेव, एवमप्यनादिपदार्थविषयमपि विज्ञानमुपहितब्रह्मणो वर्तत इति दृढीकर्तुं शास्त्रयोनित्वादिति सूत्रम् । शास्त्रं अनादिपदार्थजातमपि प्रकाशयति, भाविधर्मस्वरूपादिकमपि प्रकाशयतीति सर्वं विदितमिदम् । तदुक्तं भाष्ये-प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्येति" च । तथाचोक्तशास्त्रप्रवर्तकस्य ब्रह्मणः

SGDF
Sri Gurgeshwari Digital Foundation

सर्वज्ञत्वमवचनसिद्धमेव। पूर्वसूत्रे हि अस्यपदेन—सादिपदार्थानामेव ग्रहणम्। अत एव—"इमानि भूतानि जायन्ते" इति भूतपदं सार्थकं भवति। व्यक्तं चैतन्न्यायरत्नावल्याम्।

एतेन—पूर्वसूत्रेऽस्येत्यनेन वियदादेरिव शास्त्रस्यापि गृहीतत्वेन जगत्कारणमित्यनेन वेदकारणत्वस्यापि संगृहीतत्वेन तेनैव तस्य स्फुटीकरणसंभवादिति प्रकाशप्रसरोक्तम्—अपास्तम्। अयमत्र जगद्योनित्वाच्छास्त्रयोनित्वस्य विशेषः—यज्जगद्योनित्वं तदुपादानगोचरज्ञानमुत्पद्यमानगोचरं वैव ज्ञानं गमयेत्। शास्त्रयोनित्वं तु स्वोपानगोचरमनादिभूतमप्यखिलपदार्थविज्ञानं गमयेदिति। तदुक्तं खण्डने—कृत्स्नस्य जगतो ब्रह्मणश्च सपरिकरस्वरूपस्य शास्त्रैकसमधिगम्यतया तादृशशास्त्रनिर्माणत्वस्य जगन्निर्माणेनास्फुटीकृतसार्वज्ञस्फुटीकरणप्रयोजकत्वोपपत्तेः—इति।

यत्तु प्रकाशप्रसरे—कृत्स्नस्य जगतो यथायथं प्रत्यक्षादिप्रमाणवेद्यत्वेन शास्त्रैकसमधिगम्यत्वमसिद्धमिति वर्णितम्, तदिदं सृष्टेः पूर्वं "धाता यथा पूर्वमकल्पयदि"ति श्रुत्युपपत्त्युर्थं कारणभावेनावस्थितानां सर्वेषां स्वरूपं वेदैकसमधिगम्यमित्यवोरीकरणीयत्वादकिंचित्करम्।एतेन-पूर्वसूत्रोक्तकारणत्वातिरिक्तमानान्तरमत्र नोक्तमिति प्रकाशप्रसरोक्तम्—अपास्तम्। पूर्वसूत्रे शास्त्रकारणत्वस्याग्रहणात्, ग्रहणेऽपि जगत्कारणत्वापेक्षया शास्त्रयोनित्वस्य विभिन्नत्वाच्च। यत्तु—उपहितस्य मिथ्यात्वेनाप्रामाण्यप्रसङ्गे न शास्त्रतात्पर्यविषयत्वाभावादिति प्रकाशप्रसरे-उक्तम्, तत्र शा-

SGDF Sri Gargeshwari Digital Foundation

स्त्रावान्तरविषयत्वस्य व्यावहारिकप्रामाण्यस्य च मिथ्यात्वाविरोधित्वस्याद्वैतिरङ्गीकारादुपहितपराणां शास्त्राणां महातात्पर्यानङ्गीकाराच्च नास्माकं किमप्यनिष्टं पश्यामः। शास्त्रयोनित्वं चेदमनेकविद्यास्थानोपबृंहितनिखिलवेदप्रवर्तकत्वमेवेति तदुपादानगोचरज्ञानमात्रेण न शास्त्रयोनित्वसिद्धिर्भवति। एतेन—शास्त्रकारणत्वेन शास्त्रोपादानगोचरज्ञानमात्रसिद्धावपि न सार्वज्ञसिद्धिरिति प्रकाशप्रसरोक्तम्—अपास्तम्। सर्वथातु नाद्वैतमतमनुपपन्नम्॥

## [६] ईश्वरसर्वज्ञत्वानुमानादुष्टत्वम्।

कल्पतरौ "इदमिहानुमानम्-ब्रह्म,वेदविषयादधिकविषयज्ञानवत्, तत्कर्तृत्वात्, यथा पाणिनिरिति यदुक्तम्? यच्च--अयं घटः, एतदन्यासर्ववित्कर्तृकत्वासमानाधिकरणैतदन्यावेद्यत्वानधिकरणसकर्तृकान्यः, घटत्वात्, घटान्तरवदिति वर्णितम्, उक्तोभयानुमानतात्पर्यलब्धमनुमानान्तरं-वेदः,स्वविषयादधिकविषयकज्ञानवत्प्रणीतः, प्रमाणवाक्यत्वात्, पाणिन्यादिशास्त्रवदित्याकारं गृहीत्वा चन्द्रिकाकारा वदन्ति—गौरस्ति अश्वमस्तीत्यादिवाक्यमनेकार्थगवादिशब्दानामेकार्थज्ञानमात्रवता प्रणीतमपि प्रमाणवाक्यमेवेति तत्र व्यभिचारः—इति।

अत्रेदं विवेचनीयम्—यत् गौरस्तीत्यपि वाक्यं प्रयुञ्जानस्य गौरस्तीत्यनेन यत् गोसत्वं बोध्यते, तदतिरिक्तपदादिसत्वज्ञानमपि नास्तीति यदि भवता निर्णीतम्, तर्हि खलूक्तानुमानस्योक्तस्य-

SGDF Sri Gargeshwari Digital Found

ले व्यभिचारप्रसक्तिर्नान्यथा । नहि वेदः, स्वविषयादधिकवि-
षयज्ञानवदित्यनुमाने स्वत्रघटकपदाभिधेयसर्वार्थज्ञानवत्पुरुषप्रणीत-
त्वं साध्यम्; येनोक्तानुमानस्य व्यभिचार आशंक्येत। तदिद-
मुक्तं खण्डने—" अनेकार्थानेकपदघटितवाक्यप्रयोक्तुः तद्वाक्य
विषयादधिकार्थविषयकप्रतिपत्तेरविप्रतिपन्नत्वात्" इति । एतेन—
गवादिपदानां कोशादौ यावन्तोऽर्थाः प्रतिपादितास्तावतोऽर्थान-
जानतोऽपि यत्किंचित्कोशादिदर्शिनो गौरस्तीतिवाक्यप्रयोगसंभवे-
न तच्छब्दप्रयोक्तरि पुरुषे तद्यावदर्थाभिज्ञत्वस्य बाधितत्वादि"ति
प्रकाशप्रसरोक्तम्—परास्तम्; अनुक्तोपालंभनत्वात् ।

यत्तु प्रकाशप्रसरे—एतेन—नन्वन्योऽर्थो न तात्पर्यविषय
इत्यादि तदुक्तं ब्रह्म न स्यादित्युक्तचन्द्रिकाग्रन्थः परास्तः इति
खण्डनोक्तमपि न युक्तम्; उक्तव्यभिचारपरिहाराय यावान् तात्प-
र्यविषयस्तद्ज्ञानवता ततोऽधिकज्ञानवता च प्रणीत इति साध्या-
र्थविवक्षायाः संभावितत्वेनैव विवक्षायामिदं दूषणमिति वदताम-
नुक्तोपालंभनत्वोक्तेः कथाक्रमशिक्षाऽज्ञाननिबंधनत्वादित्यादि-वर्णि
तम्, तदिदं पूर्वोक्तप्रकारेण व्यभिचारस्यैवाप्रसङ्गेन तत्परिहा-
रार्थं कल्पनाविशेषादीनामप्रसक्तत्वेन न खण्डननिरासमर्थं
भवति। सर्वथाच न भामतीविवरणाभिमतमुक्तानुमानमपि व्यभि-
चारदुष्टमिति सिद्धम् ॥६॥



SGDF
Sri Gurgeshwari Digital Foundation

# [ ७ ] शास्त्रयोनित्वनिष्कर्षः

इदमत्र मध्वसंप्रदायानुसारिणो मन्यन्ते—यत् शास्त्रयोनित्वपदेनार्थमुपलभ्य रचयितृत्वरूपं प्रणेतृत्वं न संभवति; वेदपौरुषेयत्वापातात्, अध्यापकवदुच्चारयितृत्वमात्रं तु प्रणेतृत्वं न सार्वज्ञसाधकम्, अप्रयोजकत्वात्। तावता हि महोपाध्यायसाम्यमेव स्यात्। वस्तुतस्तु—शास्त्रयोनित्वं सार्वज्ञविरुद्धम्, न हि स्वव्यतिरिक्तोपदेश्यपुरुषगोचरभ्रमं भ्रान्तिसिद्धशरीरादिकं च विनोच्चारयितृत्वं संभवतीति शास्त्रयोनित्वमसार्वज्ञहेतुरेव स्यादि"ति। अत्रेदमद्वैतिनो मन्यन्ते! वेदकर्तृत्वं हीदं सकलवेदार्थज्ञानपूर्वकं वक्त्रन्तराधीनानुपूर्व्यनपेक्षसकलवेदोच्चारयितृत्वमेव। इदमेव हि भाट्टानामपि संमतम्। इदं च न महोपाध्यायादिसाधारणम्। जातिस्मराणामपि हि प्रथमजातौ वक्त्रन्तराधीनानुपूर्वीकवेदोच्चारयितृत्वमेव, न तदनपेक्षमुच्चारयितृत्वमिति न दोषः।

एतेन—अध्यापकेऽपि पूर्वसदृशानुपूर्वीरचयितृत्वस्य भावात् स्वेच्छया वेदरचयितृत्वस्य ब्रह्मण्यप्यभवात् अध्यापकत्वादधिकस्य शास्त्रयोनित्वस्य तावताप्यसिद्धत्वेन सार्वज्ञसाधनासंभवात् महोपाध्यायेऽपि तत्तदर्थानुसंधानपूर्वकसजातीयोच्चारणापेक्षोच्चोरयितृत्वसत्त्वात् इत्यादिप्रकाशप्रसरोक्तम्-अपास्तम्। अध्यापकमहोपाध्यायादीनां पूर्वोक्तरीत्या वक्त्रन्तराधीनानुपूर्वीरचयितृत्वसत्त्वेऽपि तदनधीनवेदकर्तृत्वेनादोषात्।

SGDF
Sri Gargeshwari Digital Foundation

यद्यपि जगत्कारणस्येश्वरस्य भ्रान्तिसिद्धमस्मदादिशरीरसदृशं शरीरं न सम्भवति। एवमपि मायाख्यं शरीरं वर्तत एवेति न दोषः। यत्तु प्रकाशप्रसरे केयं मायेति विकल्पेन मिथ्याभूतायां मायायां न प्रमाणमस्तीति वर्णितम्, तदिदमद्वैतसिद्ध्यादिष्वेव निरासितम्। अतत्त्ववादिनो यां प्रकृतिं मन्यन्ते सैवाद्वैतिभिर्मायेति स्वीक्रियते। इयान् विशेषः—यत् तेषां मते सा सत्यम्, अद्वैतिनां मते त्वसत्यमिति। तदसत्यत्वं च ज्ञाननिवर्त्यत्वहेतुना प्रथमाधिरण एव साधितमिति नात्र किमपि वक्तव्यमस्ति। अघटितघटनापटीयस्या मायाया विनाऽपि करचरणाद्यवयवं शरीरकार्यकारित्वं कथं न संभवति? एतेन—लोके उच्चारणस्य भोगोत्पादकशरीरपटुकरणत्वव्याप्यतया दृष्टत्वेनाशरीरस्यापटुकरणस्य चेश्वरस्योच्चारणासंभवात्, अज्ञानविशेषरूपतया भवदभिमतमायाया उच्चारणप्रयोजकशरीररूपताया बाधितत्वात् करचरणाद्यवयववत्त्वस्यैव शरीरपदप्रवृत्तिनिमित्तत्वेन मायायां तदभावेन शरीरत्वानुपपत्तेरिति प्रकाशप्रसरोक्तम्—अपास्तम्, नहि करचरणावयववत्त्वस्यैव शरीरपदप्रवृत्तिनिमित्तत्वे वृक्षादिशरीरताव्यवहार उपपद्यते। नहि वृक्षादौ करचरणाद्यवयवविशेषोपलब्धिः कस्यापि वर्तते। चेष्टावदन्त्यावयवित्वादिकं खलु शरीरपदप्रवृत्तिनिमित्तं सर्वेऽपि प्रामाणिका मन्यन्ते।

यत्तु प्रकाशप्रसरे—कुलालादावप्यन्तःकरणोपाधिना सर्वनिर्वाहे बाह्यशरीरापेक्षाऽभावप्रसङ्गादि-त्युक्तम्, तदिदमस्माभिरप्यानुमानिकेश्वरकारणावादस्यास्वीकारात् श्रुत्यर्थोपपादनस्यैव क्रि-

SGDF
Sri Gargeshwari Digital Foundation

यमाणत्वात् यथादृष्टं यथाश्रुतं चैव कस्यापि सिद्धान्तस्याङ्गीकरणीयत्वादनवसरमेव। आधिकारिकपुरुषाणां वसिष्ठादीनामिव मिथ्याशरीरस्यापि परमात्मात्मनोऽप्युपदेशकत्वं संभवत्येव। आत्यन्तिकनिवृत्तिस्तु परमात्मनः सगुणस्य तदैव स्यात्, यदि तदुपाधिभूतसर्वजीवाश्रिताविद्याविनाशो भवेदिति न किंचिदनुपपन्नम्। एतेन—मायामयस्य मायामयत्वेन दर्शने उपदेशाद्ययोगादिति प्रकाशप्रसरोक्तम्—अपास्तम्। इयान् विशेषः—यदीश्वरो न मायावशः, आधिकारिकास्तु तत्संस्कारवशा इति।

यत्तु चन्द्रिकाखण्डने—मायाकार्यसर्ववस्तुविषयमायावृत्तिरूपज्ञानवत्त्वात्मकसर्वज्ञत्वस्य तदुपयुक्तशब्दोच्चारणस्य च मायाख्यशरीरेण निर्वाहे तदर्थं शरीराद्यनपेक्षणादित्युक्तम्, तस्याप्ययमेवाशयः। आधिकारिकाणामपि हि विक्षेपशक्तिमात्रमवशिष्टं नावरणशक्तिरिति समानत्वात्। एतेन—-ब्रह्मणो भ्रान्तत्वापत्तिरपि—-परास्ता। तदुक्तं खण्डने—"तूलाविद्यापरिणामरूपभ्रमाख्यवृत्तिमत्त्वस्यैव भ्रान्तत्वप्रयोजकत्वादिति"॥

अनेन ह्यावरणशक्तिसमवहितमायावृत्तिमत्त्वमेव भ्रान्तत्वव्यवहारप्रयोजकतया विवक्षितमिति जगत्कारणस्य ब्रह्मणो नोक्तव्यपदेश आपद्यते। किंच ब्रह्मणो भ्रान्तत्वापत्तिरित्यनेन किमत्र विवक्षितम्—किं जीवस्येव कल्पितत्वापत्तिः, आहो भ्रान्त इति व्यवहारापत्तिरिति। आद्ये इष्टापत्तिः; जगत्कारणस्य मिथ्यात्वेनैवाद्वैतभिरङ्गीकारात्। द्वितीयेतु अहं भ्रान्त इति ब्रह्मण एव व्यवहार आपद्येतेति विवक्षितम्, उतास्मदादीनां ब्रह्म भ्रान्तं इति व्यवहार

SGDF Sri Gangeshwari Digital Forum

आपद्येतेति। उभयत्रापि बाधज्ञानानन्तरं वोक्तव्यवहारः, उत तत्पूर्वमपि। द्वितीयं तु न युक्तम्; बाधज्ञानं विना रज्जुसर्पादिज्ञानस्यापि भ्रान्तत्वव्यवहाराभावात्। अन्यथा बाधज्ञानात् पूर्वं भयकंपाद्यनुवृत्त्यनुपपत्तेः। बाधज्ञानानन्तरं तु भ्रान्तत्वव्यवहार इष्ट एवेति भ्रान्तत्वापादनमिदमापातरमणीयमेव।

एतेन—अविद्यावृत्तेरिव मायावृत्तेरपि बाधितार्थविषयत्वेन भ्रमत्वेऽविद्यावृत्तिमत एव भ्रान्तत्वं न मायावृत्तिमत इत्यस्य त्वदनुभवैकवेद्यत्वेनाप्रामाणिकत्वात्, अविद्यावृत्त्यपेक्षया मायावृत्तेर्दीर्घकालिकत्वेन दीर्घभ्रान्तितया तद्वतोऽधिकभ्रान्तत्वस्यैव युक्तत्वाच्चेति प्रकाशप्रसरोक्तमपि—परास्तम्। ईश्वरस्यातीतादिविषयमपि ज्ञानमद्वैत्यभिमतं साक्षिज्ञानरूपमेव। "सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिभास्यमिति वचनात्। तत्रचेश्वरसाक्षी मायोपहितचैतन्यमेवेति परिभाषादावेव व्यक्तम्। तथाच विनापि मनोऽतीतपदार्थज्ञानमपीश्वरस्य संभवत्येव। ईक्षत्यधिकरणे ह्यस्मदीये भाष्ये "नासाक्षिका वृत्तिर्जानातिनाऽभिधीयते" इत्येवोक्तम्, नामनोनिबंधनेति।

"एतेन–यस्य सर्वविषयावभासक्षमं नित्यं ज्ञानमस्ती"ति त्वद्भाष्यविरोधेनेश्वरज्ञानस्य मायावृत्तित्वाङ्गीकारायोगात् ईश्वरस्यातीतानागतविषयेष्वपि अतीतविषये स्मृतेरेव त्वदभ्युपगतत्वेन मनोवृत्यात्मकज्ञानस्यावश्यकत्वेऽप्रामाणिकमायावृत्त्यात्मकज्ञानकल्पनानुपपत्तेरिति प्रकाशप्रसरोक्तम्—अपास्तम्। सर्वथा चोपहितस्य जगत्कारणस्य शास्त्रयोनित्वेन सर्वज्ञत्वसाधनं न कथ-

SGDF

मपि भामतीमतरीत्याऽनुपपन्नम् । यत्तु विवरणे—ब्रह्म, वेदगतसर्व-विषयप्रकाशनशक्त्याधारः, वेदोपादानत्वात्, दीपगतप्रकाशन-शक्त्याधारदीपोपादानाग्निवत्, इत्युक्तम्, तदपि नानुपपन्नम् । यत्तु प्रकाशप्रसरे—ब्रह्म, स्वोपादेयदहनादिगतदाहादिमत्, अन्ध-कारादिगतावरणत्वादिमत् स्यादिति, चन्द्रिकानुसारेणोक्तम्, तदिदं ब्रह्मणि ज्ञानस्येव दाहकत्वादीनां धर्मिग्राहकमानबाधित-त्वादनवसरमेव । नहि ब्रह्मणि ज्ञानत्वमपि बाधितम् ।

अनेन हि सूत्रेण ब्रह्म ज्ञानशक्तिमत् वेदोपादानत्वादिति सत्प्र-तिपक्षानुमानान्तरं प्रदर्शितमिति तन्निरासोऽर्थसिद्ध एव । सत्प्र-तिपक्षानुमानं चेदं "सत्यं ज्ञानमनन्तं ब्रह्मे" तिश्रुत्यनुगृहीतत्वात् पूर्वानुमानापेक्षया प्रबलमेव । उक्तविधज्ञानत्वमेव सर्वज्ञपदार्थ इति हि विवरणमतम् । तदुक्तं लघुचन्द्रिकायाम्—"सर्वतादात्म्यस्यैव सर्वविषयकत्वरूपत्वादि"ति । व्याख्यातं चेदं विठलेशीये—"तथाचेद-मेव सर्वज्ञत्वमि"ति । इदं च सर्वज्ञत्वं भ्रमाधिष्ठानत्वं विना न सं भवतीति परंपरया भ्रमाधिष्ठानत्वं यदत्र विवक्षितम्, तदिदमत्रा-नुकूलमेव; ज्ञानस्यैव भ्रमधिष्ठानत्वात् । विवर्तवादमेवानुसर-न्तोपि वयं तदुपयोगितया परिणामवादमप्यूरीकुर्म इति हि "भो-क्त्रापत्तेरि" त्यधिकरणे व्यक्तम् । तथाच विवर्तवादसमर्थनार्थमपे-क्षितज्ञानत्वव्यवस्थापनार्थं परिणामवादोऽत्राङ्गीकृतः । तथाच परिणामवादमङ्गीकृत्यैवात्र ज्ञानत्वसाधनं क्रियत इति सिद्धम् । एतेन--"तत्रोपादानत्वस्य भ्रमाधिष्ठानत्वरूपत्वेन दीपप्रदीपयोरि-व परिणामिपरिणामभावाभावात् भ्रमाधिष्ठानत्वविवक्षायामप्रयो-

SGDF Sri Gargeshwari Digital Foundation

ज्ञकत्वम्। नहि परिणामिपरिणामयोरिवारोप्याधिष्ठानयोरेकशक्तिमत्त्वं दृष्टम्" इत्यादिप्रकाशप्रसरोक्तम्—अपास्तम्। अत्र विवरण एव कर्तुश्चेतनस्य अग्निकार्यप्रभायां दाहशक्तेरभावात् ज्ञानशक्तिरेवानुमीयते। नचोपादानोपादेययोः सर्वशक्त्या भाव्यमिति नियमः। अग्निकार्यप्रभायां दाहशक्तेरननुगतत्वादित्युक्तमिति—वेदे ज्ञानकरणत्वशक्तिः, ब्रह्मणि तु कर्तृत्वशक्तिरिति कथमेकशक्तित्वसाधनम्? अन्यथा "ब्रह्मण्यपि ज्ञानकरणत्वप्राप्त्या ज्ञानाश्रयत्वालाभेनाज्ञत्वप्रसङ्ग" इति प्रकाशप्रसरोक्तमनवसरमेव। अत्रच ज्ञानत्वमेव साध्यं न ज्ञानाश्रयत्वमिति ज्ञानाश्रयत्वालाभेनेत्यनुक्तोपालंभनमेव। एतेन—आविद्यासार्वज्ञापत्तिरपि चन्द्रिकाप्रकाशप्रसरापादिता—परास्ता; बाधात्। यथाच ब्रह्मणो ज्ञानत्वं न निर्विशेषश्रुतिविरुद्धं तथा विवरण एव व्यक्तमिति न कोऽपि दोष इत्यलमतिविस्तरेण ॥७॥

## [८] सार्वज्ञसिद्ध्युपयोगः ॥

अकारणव्यावृत्त्यर्थं कारणत्वमिवाऽज्ञानव्यावृत्त्यर्थं ज्ञानत्वनिरूपणमप्यपेक्षितमेवेति "कारणत्वेनैवोपलक्ष्यस्वरूपसिद्धौ किं सार्वज्ञस्फारणेनेति" चन्द्रिकाऽपि परास्ता। तदुक्तं खण्डने—"कारणत्ववदुपपाद्यसार्वज्ञस्यापि निर्विशेषस्वरूपोपलक्षकतया तत्प्रतिकूलत्वाभावादि"ति॥ यथाच भामतीमते सार्वज्ञं विना न जीवव्यावृत्तिस्तथा पूर्वमेव विवेचितम्। तदयं निष्कर्षः—विवरणमते शास्त्रयोनित्वसूत्रेणाज्ञानव्यावृत्त्यर्थं ज्ञानत्वनिरूपणम्,

SGDF Sri Gargeshwari Digital Foundation

भामतीमते जीवव्यावृत्त्यर्थं सार्वज्ञस्फोरणम् । आद्यमते विवर्त्तोपादनताव्यवस्थापनपरं शास्त्रयोनित्वमित्यपि विशेषः परंपरासिद्धोऽवगन्तव्यः । यत्तु प्रकाशप्रसरे—न ह्यखण्ड उपलक्ष्ये सर्वावयवप्रतीत्यर्थमुपलक्षणान्तरमिति वक्तुं युक्तमित्याद्युक्तम्, तद्भामतीमते सविशेषस्य कारणताविवक्षणादनवसरमेव । विवरणमते तु कारणत्वविशिष्टाविद्यावारणार्थं ब्रह्मनिष्ठमेव कारणत्वं विवक्षितमिति सूचनमेव क्रियत इति न "नह्यखण्डे" इत्याद्यादीनामवसरलेशोऽपीति सर्वमनवद्यम् ॥८॥

## [९] शास्त्रयोनित्वस्य प्रथमाध्याये सङ्गतिः ॥

यत्तु चन्द्रिकायां श्रुतीनां परस्परविरोधपरिहाराय ब्रह्मातिरिक्तसर्वमिथ्यात्वस्य वियत्पादे वक्ष्यमाणतया तत्रैवशास्त्रयोनित्वस्य वक्तुं सुसङ्गतत्वेनेह तदुक्त्ययोग इति शङ्का कृता, सेयं परिमलेऽप्यनूद्यैवं परिहृता—"पूर्वसूत्राक्षिप्तसर्वज्ञत्वदृढीकरणार्थतयेह वेदकर्तृत्वं व्यावस्थापनीयम् । तेनार्थात् ब्रह्मणः सर्वकारणत्वमनुपपन्नं वेदस्य नित्यत्वादिति शंकानिवारणमपि लभ्यत इत्यानुषङ्गिकार्थकथनपरोऽयं श्लोकः । आनुषङ्गिके चार्थे न पृथक्सङ्गत्यपेक्षे"ति ।

अयं भावः---यथा रुद्रादिजगत्कारणत्वनिषेधं वक्ष्यमाणमपि सिद्धवत्कृत्य शास्त्रयोनित्वादिसूत्रं चन्द्रिकारादीनाम् , एवं वेदानित्यत्वं साधयिष्यमाणं सिद्धवत्कृत्य तत्कर्तृत्वेन सर्वज्ञत्वसाधनमेवात्र क्रियते, नतु वेदानित्यत्वम्, येन वियत्पाद एव सङ्गतिः

SCDF Sri Gargeshwari Digital Foundation

स्यात् । अतएव आकाशाधिकरणेऽनन्तत्वं ब्रह्मलिङ्गमिति सिद्धान्तो भवतामप्युपपद्यते ।

यत्तु खण्डने--"अवश्यापेक्षितप्रमाणोपन्यासार्थं शास्त्रस्य वक्तव्यत्वेन योनित्वादिति निर्देशेन वेदनित्यत्वप्रयुक्तकारणत्वासंभवशंकानिवारणसंभवे वेदानित्यत्वार्थं वियत्पादे सूत्रान्तरं कृत्वा वेदानित्यत्वं विचार्यमित्यापादनस्य लाघवतर्काज्ञानमूलत्वात्—इत्युक्तम्, अनेनतु सर्वज्ञत्वहेतुतया वेदानित्यत्वमेव नात्र विवेक्षितम्, किन्तु वर्णकान्तरसूचनमपीति प्रथमवर्णकार्थेनापि वेदानित्यत्वहेतुकसर्वज्ञत्वव्यवस्थापनपरेण न मुख्यतया वेदानित्यत्वं सिषाधयिषितमित्येव विवक्षितम्, नतु सूत्रे वेदानित्यत्वमेव न बोधितमिति नवा प्रमाणप्रदर्शनपरत्वमेव मुख्यं प्रथमवर्णकार्थोऽमुख्य इति वा। एतेन—तस्य सूत्रार्थत्वेनैव वर्णनेनानुषङ्गिकत्वोक्तेरयुक्तत्वादिति प्रकाशप्रसरोक्तम्—अपास्तम्, नहि वयं सूत्रार्थत्वं वेदानित्यत्वस्य नास्तीति वक्ष्मः, किन्तु न तदत्र प्रतिज्ञाविष इत्येव। अत्रहि न वेदानित्यत्वमानुषङ्गिकतया विवक्षतिम्, किन्तु, तन्नित्यत्वशंकानिवारणमेव। तच्च तत्कारणत्वहेतुत्वविवक्षयाऽर्थसिद्धमेव ह्यत्राङ्गीक्रियत इति न दोषः। हेतुतया विवक्षितं च शास्त्रकर्तृत्वं प्रमाणान्तरसिद्धमेव। अभ्युपगतं हि कुमारिलपादैरपि—"शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते। तदप्यधिष्ठितं सर्वमेकेन परमात्मना॥ तथैवर्गाद्यो वेदा प्रोक्ता येऽपि पृथक् पृथक्" इति ब्रह्मैकत्वाधिकरणे वर्णयद्भिः।

एतेन—वेदकर्तृत्वे सूत्रे प्रमाणानुक्तेः प्रतिज्ञामात्रत्वप्रसङ्ग

SGDF
Sri Gangadhar Digital Foundation

इति प्रकाशप्रसरोक्तम्—अपास्तम् । अत्रहि तत्सर्वज्ञत्वहेतुतयैव विवक्षितमिति न प्रतिज्ञामात्रत्वप्रसङ्गः ।

एतेन—नच—"अस्य महतो भूतस्य निश्वसितमि" त्यादिश्रुत्या तत्सिद्धिरिति शंका, वाचा विरूपेति श्रुतिविरोधेन तत्सिध्यसंभवात् इति परिहारः, श्रुतिविरोधपरिहारार्थं वियत्पादसङ्गतिरपरिहार्येत्याद्युपासंहारश्च प्रकाशप्रसरगतोऽकाण्डताण्डवमेवेति—सूचितम् । किंच वेदानित्यत्वस्य वियत्पादे सङ्गतिरित्यनेन किं विवक्षितम् ? किं तत्रैव तदनित्यत्वव्यपदेशो हेतुतयाऽधिकर्तव्य इति वा, साध्यतया कर्तव्य इति वा, आद्ये न तत्र सङ्गतिः ; तत्र तत्साध्यताया एव विवक्षितत्वात् । द्वितीयेतु वियदाद्यनित्यत्वसाधनेन तस्यापि सिद्ध्या पृथक् तदनित्यत्वं कुत्रापि न वक्तव्यमिति शास्त्रयोनित्वसूत्रवैयर्थ्यमेवापादनीयं न तस्य वियत्पादे सङ्गतिः । अधिकाशंकानिवारणेन कथमपि तत्र सङ्गतिर्वर्त्तत इति यदि तस्य तत्रैव करणापत्तिरित्युच्यते, तर्हि अत्र हेतुत्वविवक्षया तन्निर्देशस्य को विरोधः । एवंच वियत्पादसङ्गतिर्हेतुतया विवक्षितस्य वेदानित्यत्वस्य कथमपि न भवतीति सूचितम् ।

यत्तु चन्द्रिकाखण्डने सूत्रान्तरं कृत्वेत्युक्तम् , तस्यायमाशयः, यत् आकाशानित्यत्वन्यायसिद्धानित्यत्वानुवादेन हेतुतया विवक्षणमहिम्नैवेष्टसिद्ध्या तत्र पृथक् सूत्रं न कर्तव्यमिति । एतेन—त्वद्भाष्यकारैरेवाकाशानित्यत्वन्यायेनैव वेदानित्यत्वस्यापि सूचितत्वादित्यादि प्रकाशप्रसरोक्तिर्नास्माकं विरोधिनी, यतोऽस्मदभिप्राय एव संगृह्यते । वस्तुतस्तु—पूर्वसूत्रेणैव वेदानित्यत्वमपि

SGDF
Sri Gangeshwari Digital Foundation

सूचितमिति तेनैव हेतुना सर्वज्ञत्वसाधनं क्रियत इति नानुपपत्ति-लेशोऽपि । जगत्कारणस्याध्यापकतुल्यत्वं तु पूर्वमेव बहुधा दूषितम् । तत्सिद्धं न चन्द्रिकाकृतां तदनुसारिणां वा किमपि दूषणमद्वैतमते प्रसरतीति ॥९॥

## [१०] वेदकर्तृत्वस्यानुमानिकत्वोपपत्तिः ॥

अद्वैतिनो हि "अस्य महतो भूतस्ये"ति वाक्येन वेकर्तृत्वं तेन च सर्वज्ञत्वमानुमानिकं मन्यन्ते, नतु इदमेव वाक्यं सर्वज्ञत्वसाधकमिति । एतेन—"अस्य महतो भूतस्ये"तिवाक्यं सर्ववेदकर्तृत्वेन ब्रह्मणः सर्वज्ञत्वं साधयतीत्यसत्, अस्य वाक्यस्यानुमानरूपत्वाभावादिति चन्द्रिकोक्तमनुक्तोपालंभनमिति—सूचितम् । किंचानुमानरूपत्वाभावादित्यनेन हेतुत्वाभावादिति विवक्षितम्, उत पक्षसाध्यहेतुसहितानुमानप्रयोगत्वाभावादिति वा, आद्ये वेदकर्तृत्वस्यैव सर्वज्ञत्वसाधकत्वेनानुमानत्वं नासिद्धम् । द्वितीयं त्विष्टापत्तिपराहतम् । तदुक्तं खण्डने—सर्वज्ञत्वव्याप्यवेदकर्तृत्वप्रतिपादकत्वेनास्यानुमानरूपत्वे बाधकाभावादिति । अत्रेदं तात्पर्यम्—नहि वयमुक्तवाक्यमनुमानं मन्यामहे, किन्तु तद्बोधितवेदकर्तृत्वं यत् सूत्रकारैः पंचम्यन्तपदेनैव निर्दिष्टम् । तथाच सूत्र एवात्रानुमानविवक्षा न श्रुताविति । एतेन—अस्य वाक्यस्य लिङ्गसमर्पकत्वेऽपि लिङ्गत्वाभावात्, अन्यथा सधूमो गिरिरिति वाक्यस्यापि वह्निसाधकानुमानत्वापत्तेर्लिङ्गत्वव्यापकविभक्त्यन्तपदघटितत्वाभावेनौपचारिकानुमानरूपत्वस्याप्यभा-



SGDF Sri Gangeshwar Digital Foundation

वाच्च, पारिभाषिकानुमानत्वे पर्यवसानाच्चेति—प्रकाशप्रसरोक्तमपास्तम्। भावानवबोधात्, अनुक्तोपालंभनत्वाच्चेति न किंचिद्वच्यम् ॥१०॥

## [११] माध्वसंमतोक्ताधिकरणशरीरानुपपत्तिः ॥

यत्तु माध्वानां "शास्त्रयोनित्वादि"ति सूत्रेणानुमानिकेश्वरकारणतावादनिरासः पाशुपतागमप्राप्तरुद्रकारणतावादनिरासश्च क्रियत इति मतम्, तदिदं पूर्वस्मिन्नेव सूत्रे "अस्यानुवादकत्वेऽपि श्रुतिप्राप्तकारणतापरत्वादि"त्यादिनाऽऽनुमानिकेश्वरकारणतावादस्य श्रुत्यमूलागमप्राप्तरुद्रकारणतावादनिरासस्य च सिद्धत्वात् व्यर्थमेतदधिकरणमापादयत् न केवलं तद्भाष्यकाराणां किन्तु सूत्रकाराणामपि शून्यहृदयत्वमापादयतीति सर्वाङ्गावद्यं तन्मतमिति सिद्धम्। एतेन—"तस्मात् परोक्तमयुक्तमिति पदवाक्यप्रमाणविदामग्रेसरैरस्मद्भाष्यकारैरुक्त एव सूत्रार्थोऽनवद्यो हृद्यश्चे"ति प्रकाशप्रसरोक्तम्--अपास्तम्। कुमारिलपादा हि "हेतुदर्शनाच्चे"ति सूत्रे सांख्ययोगपाशुपतपांचरात्राणां सर्वेषामपि त्रयीविद्भिरपरिगृहीतत्वादप्रामाण्यमेव स्पष्टमेव निरूपयन्तीति यदि शैवागमो न शास्त्रम्,तर्हि पांत्ररात्रमपि न शास्त्रमेवेति तदनुसारेण सिद्धान्तकरणं सर्वथा दुष्टमेव। यत्तु "सांख्यं योगः पाशुपतं वेदारण्यकमेव च"ति वाक्ये वेदारण्यकशब्देन पांचरात्रं विवक्षितमिति चन्द्रिकातदनुसारिणां विवक्षणम्, तदिदमपि सांख्यादिसाम्यमेव गमयति। नह्यन्यथैकस्मिन्नेव श्लोके सर्वेषां ग्रहणं संभवति। अन्यथा

SGDF Sri Gangeshwari Digital Founda

कथं भवतां समन्वयसूत्रे पूर्वपक्षोत्थितिः ? तदुक्तं चन्द्रिकायां-"नचैवं पांचरात्रादिना विष्णावपि तात्पर्यनिश्चयापत्तिः; तथापि सिद्धान्तावधारणासिद्धेः" इति ॥

एतेन—तथाप्युभयविधवाक्यदर्शनेन संदिग्धतया तन्निश्चयायोगादिति खण्डनोक्तं—व्याख्यातम् । यथाहि परमात्मनारायणप्रणीतत्वेन पांचरात्रस्य प्रमाण्यमेवं परमाप्तसदाशिवप्रणीतत्वेन शैवागमोऽपि कथं न प्रमाणं भवति ?

वस्तुतस्तु-पांचरात्रस्य पौरुषेयस्य चन्द्रिकाकारा अपि वेदमूलत्वेनेव प्रामाण्यं प्रतिपादयन्ति,नतु वेदत्वेन। तत्र वेदमूलत्वं पांचरात्रस्योक्तवचनेन नास्तीति गम्यते । अत एव हि-"वक्ता नारायणः स्वयमेवे"ति स्वयंशब्दप्रयोग उपपद्यते। स्वयं शब्दप्रयोगेण हि इतरानपेक्षं वक्तृत्वं गम्यते । यथाच वेदेऽपि स्वातन्त्र्यमीश्वरस्य न भवति, तथा पूर्वमेव विवेचितम् । अत्र पांचरात्रोत्कर्षे नारायणस्वयंकर्तृकत्वमेव गमकतयोक्तमिति पाशुपतादिकर्त्रपेक्षया नारायणोत्कर्षोऽपि विवक्षित इति कर्त्रुत्कर्षमूलक एव पांचरात्रोत्कर्षो गम्यते न प्रामाण्योत्कर्षकृत इत्यपि सिद्धमेव। एवंच—"सर्वेष्वेतेषु राजेन्द्रे"तिवाक्ये पांचरात्राधिकप्रामाण्यस्यैव विवक्षितत्वात्—वेदस्यैव प्रमाण्यं किं नोच्यते? पांचरात्रप्रामाण्यसिध्यर्थमिति प्रश्नोत्तरयोरपि चन्द्रिकामूलगतयोरनवसर एव । यत्तु प्रकाशप्रसरे—वेदपांचरात्रयोरेकार्थत्वेन पांचरात्रप्रामाण्ये वेदस्यापि प्रामाण्यमुक्तं भवतीति परमात्मप्रणीतत्वेन पांचरात्रप्रामाण्यस्योक्तत्वेनेत्याद्युक्तम्, तदिदं—'एतद्विशिष्यते' इति प्रामाण्यकृतमेवोत्कर्षं बोध-

SGDF
Sri Gurgesh... Digital Foundation

यतीति सिद्धवत्कृत्यैव। यथाच नायमत्रार्थो विवक्षितस्तथा स्पष्टमेव विवेचितम्। नह्यदृष्टविषयेषु वाक्येषु कर्तृस्वभावमात्रपर्यालोचनं प्रामाण्यप्रयोजकम्। अन्यथा "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि" त्याद्यधिकरणवैयर्थ्यापातात्।

अपरमत्र विचारणीयम्—यत् वेदपांचरात्रयोरेकार्थत्वेनेत्यनेन किं विवक्षितम्—किं पांचरात्रस्यापि वेदत्वेनेति उतार्थद्वयस्याप्येकपदबोध्यत्वेनेति वा, आद्ये "पांचरात्रप्रामाण्येन वेदप्रामाण्यस्यैवोक्ततया वेदस्यैव प्रामाण्यं किं नोच्यते? पांचरात्रप्रामाण्यसिध्यर्थमि"ति प्रश्नोत्तरयोरसङ्गतिः। नहि हरिपदबोध्यनारायणोत्कर्षस्तदर्थस्य मंडूकस्यापि भवतां समत इति न द्वितीयकल्पोऽप्यवसरति। तथाच भवदभिमतपाठ एव सवसंमतश्चेदपि तेनापि पांचरात्रप्रामाण्यस्यानुक्ततया न भवद्भाष्यकारणां सिद्धान्तः कथमप्युपपद्यते। यत्तु चन्द्रिकाखण्डने भागवते शिवस्यापि कारणत्वमुक्तमित्युक्तम्, तदिदं सवथोपपन्नमेव। भवदीये विवरणे शिवस्येति शब्दाध्याहारदोषोऽपरिहरणीय एव। तत्रैव ह्युपक्रमोपसंहारयोरपसंहारस्य दौर्बल्यम्, यत्र विध्यर्थवादयोरिव पदैकवाक्यता। तथाच दशमाध्यायश्लोकस्य पंचदशाध्यायस्थश्लोकस्य चैकवाक्यताऽभावादुपसंहारप्राबल्यमेवात्राङ्गीकरणीयमिति पूर्वस्यैवान्यथानयनं युक्तम्।

वस्तुतस्तु-शिवतत्त्वविवेकोक्तरीत्या विष्णुकारणतादिव्यवहाराणां सर्वेषामपि तदन्तर्यामिसदाशिवकारणतापरतया योजनमेव युक्तमिति न काऽप्यनुपपत्तिरिति शैवागमानुसारी पर्यनुयोगः कथ-

SGDF
Sri Gurgeshwari Digital Foundation

मिव भवतां परिहरणीयः ! सर्वथा त्वद्वैतदृष्टया पांचरात्रशैवागम-योस्समानयोगक्षेमत्वमेव संमतमिति तदनुसारेण सिद्धान्तकरण-मयुक्तमेव । यथाहि 'पत्युरसामंजस्यादि'त्यनेन पाशमतमतनिरास एवं "नैकस्मिन्नसंभवादि"त्यनेन पांचरात्रनिरासोऽपि कृत इति न दोषः । यथाच सर्वासामपि श्रुतीनां भगवद्गीताया भारतस्य पुरुषसूक्तस्य च सर्वस्यापि शिवोत्कर्ष एव तात्पर्यं तथा शिवार्कमणि-दीपिकादिषु व्यक्तम् ॥ ११ ॥ इति शास्त्रयोनित्वाधिकरणम् ॥



SGDF
Sri Gangeshwari Digital Foundation

# ॥ अथ समन्वयाधिकरणम् ॥

## अद्वैतमत उक्ताधिकरणसार्थक्यम् ।

अत्र ब्रह्म, न स्वप्राधान्येन शास्त्रसमधिगम्यम्, प्रवृत्तिनिवृत्त्यन्यतरानुपयोगित्वात्, आर्थवादिकवायुक्षेपिष्ठत्वादिवदिति पूर्वपक्षः । तत्र सिद्धपदार्थस्य प्रवृत्तिनिवृत्त्यन्यतरशेषत्वं विधेयक्रियाशेषत्वेन तद्शेषत्वेऽपि क्रियाद्वारा स्वसाध्यफलस्याप्राप्तत्वेन च भवति । आद्यं व्रीह्यादीनां द्वितीयं गोदोहनादेः । ब्रह्म तु नाद्वैतिनः विधेयक्रियाशेषं न वा ज्ञानरूपक्रियाद्वाराऽप्राप्तफलोपयोगि मन्यन्त इति न हेत्वसिद्धिः। अयं च पूर्वपक्षोऽ"थातो ब्रह्मजिज्ञासे" ति जिज्ञासापदेन यद्यपि निवर्तितः; ज्ञानपदेनाज्ञाननिवर्तकसाक्षात्कारस्यैव विवक्षणमिति तत्र बोधितत्वात्, एवमपि शास्त्रयोनित्वसूत्रानन्तरमधिकाशंकया पुनरप्युपतिष्ठते ।

शास्त्रयोनित्वसूत्रेण हि ज्ञेयस्य निर्विशेषस्य च प्रतिज्ञातस्य ब्रह्मणः शास्त्रगम्यत्वमपि वर्णकान्तरेण यदा बोधितं तदानीं हीयमाशंका समुपजायते—यत् प्रवृत्तिनिवृत्त्यन्यतरपर्यवसायिवाक्यस्यैव शास्त्रत्वात् वेदान्तानामपि शास्त्राणामुपास्यब्रह्मपर्यवसानमेव स्यात्, न ज्ञेयब्रह्मपर्यवसानमिति । इयं च शंका शास्त्रगम्यत्वे तात्पर्यविषयत्वमेव गमकं न प्रवृत्तिनिवृत्त्यरशेषत्वमन्यद्वेति विवेचनेनैव निरसनीया । तत्र पूर्वपक्षे ब्रह्मणो न प्रधानतया ज्ञेयतया

SGDF
Sri Gargeshwari Digital Foundation

सूत्रनिर्देशः, सिद्धान्तेतु तस्य स्वधानतया ज्ञेयतया निर्देश इति फलभेदः।

तत्र जिज्ञास्यतां सिद्धान्तकोट्युपस्थापिका,शास्त्रयोनित्वं पूर्वपक्षकोट्युपस्थापकमिति निरूपितप्रायम्, तदर्थं च शास्त्रयोनित्वं जिज्ञास्यत्वं च विरुद्धं वा नवेति विचारः करणीयः। अत्रच क्रियापरं वाक्यं शास्त्रं प्रयोजनार्थपरं शास्त्रमिति द्वेधा शास्त्रपदार्थमभिप्रेत्य पूर्वपक्षद्वयं त्विवक्षितम्। तत्र प्रथममर्थत्वस्य जिज्ञास्यत्वस्य च विरोधो वर्तते वा नवेति विचारप्रसङ्गेनाप्राप्तप्राप्तिरेव प्रयोजनपदार्थ इति स्वीकृत्य पूर्वपक्षे प्राप्तप्राप्तिरपि प्रयोजनमेवेति सिद्धान्त इति विवेकः। अयंच सिद्धान्तः न जिज्ञासपदमात्रेण निरासमर्हति, प्राप्तप्राप्तिरपि प्रयोजनमिति विनिर्णयस्येदानीमेव प्रसङ्गादिति सर्वथा समन्वयाधिकरणं सफलमेव। एतदेवाभिप्रेत्य चन्द्रिकाखण्डन उक्तम्—"ब्रह्मसाक्षात्कारोऽज्ञाननिवर्तक इति वा,ब्रह्म अज्ञाननिवर्तकज्ञानविषय इति वा न शास्त्रादवगन्तुं शक्यत इति पूर्वपक्षनिरासार्थमिदं सूत्रमि"ति। यत्तु चन्द्रिकायां— तत्र पूर्वपक्षो निर्दलः, निष्प्रयोजनत्वशंकायास्त्वन्मत आद्यसूत्र एव जिज्ञासापदेन परिहृतत्वादित्युक्तम्, तदिदं पूर्वोक्तरीत्या ब्रह्मप्रयोजनत्वाभावादिप्रयुक्तक्रियापरत्वस्यैवात्र विवक्षितत्वादनवसरमेव॥

यत्तु कल्पतरौ वेदान्ता ब्रह्मणि प्रमाण नवेति सिद्धवस्तुबोधात् फलभावाभावाभ्या संशय इति वर्णितम्, तस्याप्ययमेवाशयः। सिद्धवस्तुबोधात् फलसिद्धिर्हि प्राप्तप्राप्तिरूपेव कंठगतचामीकरावबो-

SGDF
Sri Gangeshwari Digital Foundation

ध्यादिस्थले दृष्टेति सर्वंविदितमिदम्। नह्यवबोधमात्रजन्यं फलं क्रियानपेक्षमप्राप्तं किमपि संभवति, सिद्धं हि दध्यादिकं होमादिक्रियापेक्षमेव फलसाधनं दृष्टम्। तथाच फलाभावात् पूर्वपक्षः प्राप्तप्राप्तेरफलत्वगोचर एव पर्यवस्यतीति प्राप्तप्राप्तिफलत्वस्य जिज्ञासापदेनासिध्या नैतदधिकारणवैयर्थ्यमिति सिद्धम्॥

यत्तु प्रकाशप्रसरे—"आद्यसूत्रे जिज्ञासापदस्वारस्येन विचाराधीनब्रह्मज्ञानस्याज्ञाननिवृत्तिरूपफलसिद्धेरि"ति वदता त्वयैवोक्तत्वेन सप्रयोजनत्वं तत एव सिद्धमिति कृतकरमेवेदं सूत्रमित्युक्तम्, तस्यापि पूर्वोक्तप्रकारेणानवसरत्वमेव। नहि वयं जिज्ञासापदेन ब्रह्मज्ञानप्रयोजनत्वं न सूचितमितीदानीमपि वदामः, किन्तु सूचितस्यैव तस्य शास्त्रयोनित्वेऽपि ब्रह्मण उपपत्तिर्वर्तत इत्येवात्र वदाम इति न किंचिदनुपपन्नम्। तथाच ब्रह्मपदसूचितस्यैवार्थस्य जन्मादिसूत्रेण तत्सूत्रीयश्रुतिप्राप्तकारणताविवक्षणसिद्धान्तस्य शास्त्रयोनित्वसूत्रेण तदर्थसिद्धशैवागमप्रामाण्यनिरासस्य तत्र पांचरात्रस्यैव शास्त्रत्वेन पाशुपतस्याशास्त्रत्वेन चार्थासिद्धपांचरात्रशैवागमसमबलत्वनिरासस्यच समन्वयसूत्रेणचातत्त्ववादिमते करणेन "जन्माद्यस्य यतः" "शास्त्रयोनित्वात्" "तत्तु समन्वयादिति" सूत्रत्रयस्याधिकरणत्रयस्य च वैयर्थ्येऽपि नास्मन्मते कस्यापि वैयर्थ्यम्। वस्तुतस्तु—"अथातो ब्रह्मजिज्ञासे"ति प्रतिज्ञामात्रं कृतम्। तत्र ब्रह्मस्वरूपनिरूपणार्थपरं सूत्रद्वयं ज्ञानपदेन साक्षात्कार एव विवक्ष्यते नोपासनमिति विवेचयितुं तुरीयं सूत्रमिति जिज्ञासापदघटकज्ञाधात्वर्थविवरणरूपत्वात् समन्वयाधि-

SGDF Sri Gangeshwari Digital Foundation

करणस्यैतदधिकरणं सिद्धवत्कृत्यैव जिज्ञासापदेन ब्रह्मज्ञानस्याज्ञाननिवर्तकत्वं तत्राद्वैतिभिरुपक्षिप्यत इति जिज्ञासापदेनैतदधिकरणगतार्थतापादनमनवसरमेव। भाव्यधिकरणसिद्धार्थस्य पूर्वाधिकरणेऽपि ग्रहणं हि भवतामपि अवश्यमूरीकरणीयम्। अतएव-हि–आनन्दमयाधिकरणे चन्द्रिकायां द्युभ्वाद्यधिकरणसिद्धान्तसिद्धं जायमानत्वस्य "प्रादुर्भावो हरेर्जनिरि"त्यनुव्याख्यानोक्तरीत्या विष्णौ सावकाशत्वं गृहीत्वैव सिद्धान्तकरणमुपपद्यते। तथाचाऽऽनन्दमयाधिकरणेनैव गतार्थत्वात् भवतां द्युभ्वाद्यधिकरणं यथा न व्यर्थमेवमस्माकमपीति न दोषः। एवंच शास्त्रयोनित्वसूत्रणेनैवोपासनाविधिशेषत्वस्यापि तस्यैवाभिप्रेतत्वे सिद्धत्वेनैतदधिकरणवैयर्थ्यं मतान्तर एव भवति, नाद्वैतमते॥ यत्तु प्रकाशप्रसरे–खण्डनकाराणां स्वपरप्रक्रियाऽज्ञानं निरूपितं तदेतेन तेषामेव तदवगमयति॥

यत्तु "अत्रतैर्निर्विशेषज्ञानस्याज्ञाननिवर्तकत्वं न संभवति; भ्रमकालीनापरोक्षज्ञानानधिकविषयत्वात् निर्विकल्पकसाक्षात्कारस्य। "सर्वप्रत्ययवेद्ये स्मिन्"इति शुद्धचितौ हि भ्रमकालेप्यधिष्ठानतया भानं भवतां संमतमेव। यथाच विशेष्याविषयविशिष्टज्ञानं नास्ति, तथा पूर्वमेव विवेचितम्" इत्याद्युक्तम्, तदिदमप्रसक्तं विकल्पासहं च मन्तव्यम्। अज्ञानोपहितं भ्रमाधिष्ठानं सन् घट इत्यादौ विषयः, वृत्त्युपहितमधिष्ठानं साक्षात्कारविषय इति भ्रमकालीनापरोक्षज्ञानाखण्डाकारसाक्षात्कारयोर्हि नानधिकविषयत्वमद्वैतसंप्रदायसिद्धम्। उक्तं च लघुचन्द्रिकायां वृत्त्युप-

SGDF
Sri Gargeshwari Digital Bhandar

हितान्याविषयकवृत्त्युपहितविषयज्ञानमेवाज्ञाननिवर्तकमिति न दोषः। तदिदं भामतीमतेन। विवरणमतेऽपि भ्रमाधिष्ठानत्वमानन्दत्वादिनाऽज्ञातस्य कल्पितेनानन्दत्वेन काल्पनिकेन सम्बधेन चापि व्यावहारिकप्रामाण्यादिनिर्वाहोऽन्यत्र विवेचितः। नचानन्दत्वादिनाऽज्ञातोऽखण्डाकारसाक्षात्कारविषयः, किन्तु तद्भिन्नतया ज्ञात इति।

तदयं निष्कर्षः—भ्रमकाले संकीर्णमधिष्ठानं भासते, साक्षात्कारेऽसंकीर्णमिति न दोषलेशोऽपि। नित्यसिद्धमोक्षस्यापि साध्यत्वादिव्यपदेशो यथोपपन्नस्तथाऽद्वैतमरीत्या मुमुक्षासंभवोपपादनावसरे सम्यगेव विवेचितमिति न प्रकाशप्रसरकारा इव वयमपि पिष्टपेषणार्थं प्रवर्तामह इति सिद्धम्।

## [२] भूतार्थत्वेऽपि वेदान्तप्रामाण्योपपत्तिः॥

यदत्र भाष्ये—"नहि परिनिष्ठितवस्तुनः" इति पूर्वपक्षे निरूपितम्, तेनेदं विवक्षितम्—यत् वेदान्ताः,न निरपेक्षप्रमाणानि, भूतार्थवाक्यत्वात्, इति। अत्रहि भूतार्थत्वे सापेक्षत्वप्रयोजकत्वं यदुक्तम्,तत्रहि चन्द्रिकाकारा एवं वर्णयन्ति—"लौकिकक्रियार्थपरवाक्येऽपि सापेक्षत्वदर्शनेन पौरुषेयत्वस्यैव सापेक्षत्वप्रयोजकत्वात्" इति।

अयमस्याशयः गुरुराजीय आविष्कृतः—"सिद्धार्थबोधकत्वे सापेक्षत्वापादनमयुक्तम्, स्वाभावव्याप्याभावप्रतियोगिन एव स्वप्रयोजकत्वस्य धूमप्रयोजके वन्हौ दृष्टत्वात्, प्रयोजकाभावेन प्रयोज्याभावस्यापादनीयत्वात्, प्रकृते च तदभावात् व्याप्येनैव

व्यापकस्यापादनीयत्वात् प्रकृते च सिद्धबोधकत्वेनाप्रयोजकतया व्याप्तेरेवाभावात्, सामग्र्याः कार्यप्रयोजकत्वात् सामाग्र्या कार्यापादनवत् प्रयोजकेन प्रयोज्यस्याऽऽपादनीयत्वे परिशेषात् वाच्ये लौकिकार्यपरवाक्येऽसत्त्वेऽपि सिद्धार्थबोधकत्वे सापेक्षत्वदर्शनेन तदप्रयोजकत्वात् न प्रयोजकेन प्रयोज्यापादनमपि युक्तम्। एतेन-भूतार्थत्वेन वेदान्तपौरुषेयत्वाऽऽपादनमपि—परास्तम्; लौकिक-कार्यपरेऽपि वाक्ये सापेक्षत्वदर्शनेन तस्य तत्प्रयोजकत्वस्याप्यसंभवादिति।

अत्रेदं विचारणीयम्—कथमत्र व्याप्त्यभावोऽवगतः? नहि सिद्धार्थबोधकवाक्यत्वं यत्र यत्र तत्र तत्र न सापेक्षत्वाभावः। एतेन-लौकिककार्यपरवाक्ये व्यतिरेकव्यभिचारान्न भूतार्थत्वं सापेक्षत्व-प्रयोजकमिति प्रकाशप्रसरोक्तम्—अपास्तम्। यत्र यत्र सापेक्षत्वाभावः, तत्र तत्र भूतार्थत्वाभाव इति खलु व्यतिरेकव्याप्तिः; साध्याभावव्यापकाभावप्रतियोगित्वस्य व्यतिरेकव्याप्तित्वात्, नतु यत्र यत्र भूतार्थत्वाभावः तत्र तत्र सापेक्षत्वाभाव इति सम्यगाविष्कृतं नैयायिकप्रवरत्वं प्रकाशप्रसरकारैः। तथाच व्याप्येन व्यापकापादनमेवात्र विवक्षितमिति न दोषः। नहि समव्याप्येनैव व्यापकापादनम्। अन्यथा हि धूमेन वह्न्यनुमानमपि न स्यात्। तथाच लौकिककार्यपरवाक्ये सापेक्षत्वदर्शनेन हि सापेक्षत्वस्य व्यापकत्वमेवावगतमिति न दोषः। तथाच सिद्धार्थवाक्यत्वेन सापेक्षत्वापादनं कथमपि न दुष्टम्। अन्यथा पौरुषेयेऽपि सापेक्षत्वदर्शनादिति पर्यनुयोगः कथमिवं भवतां परिहरणीयः स्यादि-

SGDF
Sri Gargeshwari Digital Foundation

ति भवन्त एव विवेचयन्तु। तदुक्तं खण्डने—"अपौरुषेयस्याप्य-
"ग्निर्हिमस्य भेषजमि"त्यादेः प्रत्यक्षादिगृहीतग्राहित्वेन सापेक्षत्वदर्श-
नेन पौरुषेयत्वस्य सापेक्षत्वप्रयोजकत्वमित्युक्त्यसङ्गतेरि"ति॥

एतेन—पुंवाक्यानां सापेक्षत्वं भूतार्थत्वेनाहो पौरुषेयत्वेनेति भामतीवाक्यमपि—व्याख्यातम्। नह्यत्र पौरुषेयत्वं सापेक्षत्वप्रयोजकतया विवक्षितम्, किन्तु प्रकृतानुमानोपाधित्वव्यवस्थापनपरतयेति सविस्तरं परिमल एव निरूपितमिति भूतार्थत्वेन सापेक्षत्वापादनमेव युक्तम्, नतु पौरुषेयत्वेन। तदुक्तं भामत्यां—"तेन पौरुषेयत्वेऽसिद्धे भूतार्थानामपि वेदान्तानां न सापेक्षतया प्रामाण्यमि"ति।

अयं भावः—न वयं पौरुषेयत्वं सापेक्षत्वाप्रयोजकमिति वदामः, किन्तु वेदान्तानां भूतार्थत्वेनापि नाप्रामाण्यमिति। तथाच भूतार्थत्वहेतुकानुमानस्यापि कथमपि निरसनं कर्तव्यमिति सोपाधिकत्वेनास्मदीयैस्तन्निरासः कृतः, चन्द्रिकाकारैस्तु अप्रयोजकत्वेन तन्निरासः क्रियते। तथा प्रयोजकत्वं व्यभिचारेण तैर्निवार्यते। सच यदि भामत्युक्तरीत्या प्रत्यक्षादौ विवक्ष्यते, तर्हि वाक्यत्वविशेषणेन कथं स न वारितः स्यादित्यस्मदीयमेव विवरणं श्रेयः।

वस्तुतस्तु—सिद्धार्थत्वमिव कार्यार्थत्वमपि सापेक्षत्वप्रयोजकमेवेति सिद्धार्थत्वकार्यार्थत्वयोरप्रमाण्यप्रयोजकत्वमेव न संभवतीत्येव भामत्यां खण्डितमिति न पौरुषेयत्वप्रयोजकत्ववर्णनमत्रापेक्षितम्। यत्तु चन्द्रिकाप्रकाशे प्रकाशप्रसरे च—मत-

SGDF
Sri Gargeshwari Digital Foundation

एव भामत्यां "पुवांक्यानां सापेक्षत्वं किं भूतार्थत्वेनाहो पौरुषेयत्वेन। आद्ये प्रत्यक्षादीनामप्यप्रामाण्यप्रसङ्गः। अथ पुरुषबुद्धिपूर्वकतया पुंवाक्यं सापेक्षमि"त्यादिपूर्वपक्षमप्ये"तेनापौरुषेयत्वे सिद्धे भूतार्थानामपि वेदान्तानां न सापेक्षतया प्रामाण्यविघात" इति सिद्धान्तग्रन्थेनाऽऽद्यपक्षं दूषयित्वा द्वितीयपक्ष एव स्थापित इत्युक्तम्, तदिदं भामत्याशयानवबोधविजृंभितम्। भामत्यां हि पौरुषेयत्वेन सापेक्षत्वं दुर्वारमित्येव वाक्यार्थो विवक्षितः, अन्यथा कार्यार्थत्वेतु "कार्यस्यापूर्वस्य मानान्तरगोचरतयाऽत्यन्ताननुभूतपूर्वस्य तत्त्वेन समारोपेण वा पुरुषबुद्धावनारोहात् तदर्थानां वेदान्तानामशक्यरचनतया पौरुषेयत्वाभावादनपेक्षं प्रमाणत्वं सिद्धमिति प्रामाण्याय वेदान्तानां कार्यपरत्वमातिष्ठामाहे" इत्युत्तरग्रन्थे पूर्वपक्षोपसंहारपरे प्रमाण्याय कार्यपरत्वमातिष्ठामह इत्युपसंहारोऽसंगतः स्यात्। यतो भवदुक्तरीत्या लौकिककार्यपरेऽपि वाक्ये सापेक्षत्वं वर्तत इति कार्यपरत्वेनापि प्रामाण्यं न सिद्धयेदिति न किंचिदद्वैतसिद्धान्तेऽवद्यम्।

अत्रेदं विचारणीयम्-भूतार्थत्वेन सापेक्षत्वं अनधिगतार्थगन्तृत्वरूपप्रामाण्याभावो वा, उत वक्तृज्ञानपूर्वकत्वं वा। द्वितीये वक्तृज्ञानपूर्वकत्वपदेन पौरुषेयत्वं विवक्षितमुताधिगतार्थगन्तृत्वम्। तत्र द्वितीये द्वितीयः प्रथमपक्षश्च समान इति नात्र किमपि वक्तव्यम्। द्वितीयाद्यपक्षस्तु न चन्द्रिकाकाराभिमतः; पौरुषेयत्वेन पौरुषेयत्वसाधनस्यायोगात्। एतेन—'अग्निर्हिमस्य भेषजमि'त्यादौ वक्तृज्ञानपूर्वकत्वरूपसापेक्षत्वस्यं तत्रादर्शनेनोक्ततात्पर्यसिद्धे-

SGDF
Sri Gurgeshwari Digital Foundation

निराबाधत्वादिति प्रकाशप्रसरोक्तम्—अपास्तम्। तथाच परिशेषात् प्रथमपक्ष एवावतिष्ठते। तच्च सिद्धान्तदिशा कार्यपराणामपि वर्तत एवेति भामत्यां व्यक्तमेव। तदिदमभिप्रेत्यैव खण्डने वर्णितम्—'लौकिककार्यपरवाक्यस्य प्रमाणान्तरसापेक्षत्वेनोक्तप्रामाण्यास्वीकारादि'ति। एतेन—नच कार्यपरवाक्याप्रामाण्यमिष्टं पूर्वपक्षिण इति प्रकाशप्रसरोक्तम्—अपास्तम्; अनुक्तोपालंभनत्वादित्यलमतिविस्तरेण ॥२॥

## [३] नित्यप्राप्तप्राप्त्युपदेशोपपत्तिः ॥

विस्मृतमण्युपदेशेन हि यथा प्राप्तस्यैव मणेः केवलं साक्षात्कार एव भवति, नान्यत् किमपि, एवमपि प्राप्तो मणिरिति व्यवहारो भवति, एवं नित्यप्राप्तस्याप्यात्मनोऽप्राप्तत्वेन ज्ञायमानस्य यथावत्साक्षात्कार एव "तत्त्वमसी" त्यादिवाक्योपदेशेन जन्यत इति ज्ञात आत्मा प्राप्त इति व्यवहारोऽप्युपपद्यत इत्यद्वैतिनो मन्यन्ते। एतेन—तत्र काऽसौ प्राप्तिः? न तावत्स्वत्वम्; तस्य पूर्वसिद्धत्वेनोपदेशसाध्यत्वाभावात्। नापि साक्षात्कारः; साक्षात्कृतेऽपि परधने प्राप्तमित्यव्यवहारात्, तस्यैव तत्फलत्वायोगाच्च। तस्मात् मणेः स्वकण्ठदेशसंयोग एवात्र प्राप्तिर्वाच्या। तस्य चोपदेशात् प्रागपि सतः कथं फलत्वम्? इत्यादिप्रकाशप्रसरोक्तम्—अपास्तम्। प्राप्तस्यैव हि भ्रान्त्याऽप्राप्ततया ज्ञायमानस्य साक्षात्कारमात्रेण प्राप्तत्वव्यवहार उक्त इति परधनस्याप्राप्तस्य बाह्यक्रियाद्यपेक्षयैव प्राप्तत्वव्यवहारयोग्यस्य न साक्षात्कार-

SGDF Sri Gangeshwari Digital Foundation

मात्रेण प्राप्तत्वव्यवहार आपद्यते। नहि साक्षात्कारस्यैव तत्फलत्वे काऽपि हानिरस्ति। नह्येतादृशं साक्षात्कारव्यतिरिच्य किमपि सुखविशेषादि अप्राप्तप्राप्तिस्थल इव कस्याप्यनुभवसिद्धम्। भ्रमनिवृत्तिस्तु यद्यपि फलं सर्वानुभवसिद्धम्; तथापि प्राप्त इति व्यवहारे न भ्रमनिवृत्तिर्विषयः, विषयभेदादिति न प्रकृतेऽपि भ्रमनिवृत्तिसत्त्वेन दोषः। तदुक्तं खण्डने--न विस्मृतमण्युपदेशेन विलक्षणं सुखमनुभूयते, अननुभवात्। भ्रमव्यवहितो मणिः प्राप्त इति ह्यनुभूयत इति। यत्तु प्रियवार्ताश्रवणादिना सुखोत्पादस्य सर्वानुभवसिद्धत्वादिति प्रकाशप्रसर उक्तम्, तदिदं न प्रकृतोपयुक्तम्; तत्र ह्यप्राप्तप्रियवार्ताश्रवणम्, न विस्मृतप्रियवार्ताश्रवणमिति विशेषात्। विस्मृतप्रियवार्ताश्रवणस्यैव तत्र विवक्षणेतु न कोऽपि विशेषो विस्मृतमण्युपदेशात्। मणिविस्मरणेन क्लेशमनुभवतस्तात्कालिकदुःखनिवृत्तिर्याऽनुभूयते, सा हि भ्रमनिवृत्तिरेव। नहि लोके कोऽप्यप्राप्तप्राप्ताविव प्राप्तप्राप्तौ विलक्षणं सुखमनुभवति। अस्तुवा कथमपि सुखप्राप्तिरेव सर्वेषामनुभवसिद्धेति। एवमपि प्रकृत आत्मन एव सुखरूपत्वात् सुखसाक्षात्कार एव वर्तत इति न दोषः। यथाहि मण्यादि न सुखं न तथाऽऽत्माऽपि, तस्यैवानन्दरूपत्वात्।

तथाच प्राप्तप्राप्तिरपि लोके वर्तत इत्येतावन्मात्रस्य दृष्टान्तेन विवक्षितत्वात् सुखप्राप्तेरविवक्षितत्वात् न दोषः। नहि तत्र मणिः प्राप्त इति व्यवहारो नास्तीति भवतामपि वक्तुमलम्, अनुभवापलापायोगात्। यत्तु मणिः प्राप्त इति व्यपदेशो विस्मृतमणि-

SGDF
Sri Gargeshwari Digital Foundation

स्थले नास्त्येवेति प्रकाशप्रसर उक्तम्, तदिदमतिसाहसम् । अन्यथाऽप्राप्तप्राप्तिस्थलेऽपि सुखमेवानुभूयत इति मणिः प्राप्त इति व्यवहारो नास्तीति कथं न कल्प्यते ? एवंच विस्मृतमण्युपदेशस्थले मण्यतिरिक्तसुखप्राप्तिरिव प्रकृत आत्मातिरिक्तसुखस्याप्रसिद्धत्वेन मणिः प्राप्त इतिवत् आत्मा प्राप्त इति व्यपदेशो नानुपपन्न इति सिद्धम् ॥३॥

## [४] तात्पर्यहेतुत्वोपपत्तिः ॥

अत्र प्रयोजनार्थं क्रियापरत्वमङ्गीकरणीयमिति पूर्वपक्षे ह्याशङ्काद्वयं विवक्षितम्—सिद्धस्य प्रयोजनत्वासंभव इति, सिद्धस्यापि प्रयोजनत्वेपि क्रियाशेषतयैव सिद्धविवक्षोपपन्नेति च । तत्र सिद्धस्यापि प्रयोजनत्वं लौकिकदृष्टान्तानुसारेणैव साधयितुं शक्यमिति न सूत्रकाराणां तत्र प्रयत्नोऽपेक्षितः । अपरस्त्वंश "आम्नायस्य क्रियार्थत्वादि"ति सौत्रानुसारादिति सूत्रकारैरेव सप्रयत्नं निरस्यते—समन्वयादिति । अनेन वेदार्थत्वं हि न क्रियात्वतच्छेषत्वान्यतरप्रयुक्तम्, किन्तु तात्पर्यप्रयुक्तमिति सिद्धेपि तात्पर्यस्य वर्तमानत्वान्न तदर्थत्वमनुपपन्नमिति बोध्यम् । नह्यत्र पूर्वपक्षी फलाभावात् ब्रह्मणि वेदान्तानामतात्पर्यं मन्यते, किन्तु सत्यपि तात्पर्ये क्रियायास्तच्छेषस्य वैव वेदार्थत्वमिति नियमात् यथा कथंचिदुक्तनियामाविरोधेन नयनं संभवतीति । अत्रचाखण्डपरतात्पर्यस्यान्याथानयनं कथमपि न संभवति; कथमपि क्रियासम्बधायोग्यत्वादिति समन्वयहेतुकं ब्रह्मणः शास्त्रगम्यत्वनिरूपणमुपपन्नमेव ॥

SGDF
Sri Gargeshwari Digital Foundation

सति चैवं संदर्भे पूर्वपक्षिणा फलाभावात् ब्रह्मणि वेदान्तानां तात्पर्ये आक्षिप्ते फलादिकं तात्पर्यं चानुपपाद्य तात्पर्यं हेतूकर्तुमयुक्तमिति चन्द्रिकानुवादोऽप्येतेनापास्तः, अत्र तात्पर्यस्यानाक्षिप्तत्वात्। क्रियाशेषतया ब्रह्मान्वयेनापि तात्पर्यनयनस्यैव पूर्वपक्षिविवक्षितत्वात्। अतएव भाष्ये न ब्रह्मणः कथमपि क्रियाशेषत्वं संभवतीति व्यवस्थापितमुपपद्यते। पूर्वपक्षे स्वोपष्टंभार्थं "आम्नायस्ये"ति सूत्रनिर्देशोऽपीदानीमेवोपपद्यते। उपासनाविधिशेषत्वं खलु पूर्वपक्षिणा विवक्षितमिति न किंचिदवद्यम्। अस्तुवा कथमपि तात्पर्यमपि सूत्रकारेणोपपादनीयमिति, एवमपि समन्वयादिति निर्देशबलेनैव तस्यापि साधनं विवक्षितमिति वक्तुं शक्यत्वेनादोषः। तदुक्तं खण्डने—वन्हौ सन्दिहानं प्रति धूमोऽस्तीति वाक्येनेव सूत्रे तात्पर्यादिति हेतूक्त्या प्रामाण्यतात्पर्यव्यापकफलतात्पर्ययोरप्यर्थसिद्धेरिति।

अयं भावः—प्रातिपदिकेन तात्पर्यसाधनपूर्वकं तद्धेतुत्वस्य सूत्रेण विवक्षणं नानुपपन्नम्। नहि सूत्रकारैस्सूत्रनमात्रं विना साधनार्थं प्रयत्नविशेषोऽपेक्षितः। वस्तुतस्तु संशब्देनोपक्रमाद्यवगतत्वपरेण तात्पर्यसाधनमपि सूत्रे कृतमेव। एतेन—धूम एव विप्रतिपन्नं प्रति धूम हेतुत्ववचनमिव तात्पर्य एव विप्रतिपन्नं प्रति तात्पर्यादिति वर्णनमसंबद्धमिति प्रकाशप्रसरोक्तम्—अपास्तम्। संशब्दबलेन साधनादिति सर्वमनवद्यम्।

अत्र समित्युपसर्गेणोपक्रमाद्यगवतत्वमेव विवक्ष्यत इति पूर्वमेवोक्तम्। एतेनेदं सूचितं यत् संशब्दाभावे यत्किंचित्ता-



SGDF

त्पर्यमादाय सगुण एव शास्त्रपर्यवसानमिति शंका निवारितेति ।
एतेन—लक्षणाया अमुख्यवृत्तित्वेन सौत्रसंशब्दार्थत्वायोगः ।
तदुक्तमनुव्याख्याने—"कथंच लक्षणावादी ब्रूयात् ब्रह्मसमन्वयम् ।
योऽसौ शब्दस्य मुख्यार्थस्तत्रैव स्यात्समन्वयः ।" इति चन्द्रिकोक्तम्—अपास्तम्, अनुक्तोपालंभनत्वात् । नहि वयं समन्वयपदेन लक्षणावृत्तिं गृह्णीमः, किन्तूपक्रमाद्यवगतत्वमेव । तथाच न कोऽपि दोषः । अस्तुवा समन्वयपदेनोपक्रमादिलिङ्गावगमितलक्षणाया एव ग्रहणम्, एवमपि उपक्रमानवगमितशक्त्यपेक्षया तद्विपरीतलक्षणाया एव प्राबल्यम् । "आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायादि"ति न दोषः । तदुक्तं खण्डने—"लक्षणया निर्विशेषसमन्वयस्वीकारेऽप्युपक्रमादिलिंगानवगमितशक्त्यपेक्षया प्रबलत्वेन समित्यस्योपपत्तेरि"ति ।

वस्तुतस्तु—अद्वैतिनां मते सगुणस्याप्युपास्यतया ध्येयत्वेन तदुपयोग्यवान्तरतात्पर्यस्य शक्तिविषयपरत्वस्यापि ग्रहणमपेक्षितमित्युभयसाधारण्यार्थं संशब्दप्रयोग उपपन्न एव । इदमेवाभिप्रेत्य खण्डनकाराः—सर्वज्ञं सर्वशक्ति इत्यादिना सगुणेऽपि समन्वयोक्त्या समित्युपसर्गोपपत्तेरिति—वदन्ति । मिथ्याभूतस्यापि सगुणस्यावान्तरतात्पर्यविषयत्वस्यैव विवक्षणाच्चास्मन्मते न काऽप्यनुपपत्तिः ।

एतेन—अनिर्वाच्याविद्यावच्छिन्नस्य सगुणस्य मिथ्यात्वेन जिज्ञास्यत्वायोगादीनां पूर्वमेवासकृदावेदितत्वादित्यादिप्रकाशप्रसरोक्तम्—अपास्तम् । अत्रहि वयं निर्गुणोपयोगि तात्पर्यं सगु-

SGDF
Sri Gargeshwari Digital Foundation

णोपयोगितात्पर्यं च नैकमवगच्छामः, किन्तु भिन्नमेव । अत एव सूत्रावृत्त्योभयतात्पर्यविवक्षायास्सर्वत्रापेक्षितत्वान्न विरोधः । एतेन—निर्विशेषब्रह्मपरतया त्वदभिमतवेदान्तवाक्यानां सगुणे-समन्वयस्योपादनाच्चेति प्रकाशप्रसरोक्तमनुक्तोपालंभनमिति—सूचितम् । यस्त्वत्रोपक्रमाद्यवगतत्वं लक्षणया वर्णितम्, तदिदमुपक्रमाद्यवगततात्पर्यानुपपत्तिगम्यत्वाभिप्रायमिति "उपक्रमादीनां तात्पर्ये लिङ्गत्वेऽपि लक्षणाग्राहकत्वायोग"इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम् । सर्वथा चाद्वैतमते यथायथं सगुणवाक्यानामवान्तरतात्पर्येण विचारितानामेकवाक्यतयैव निर्गुणवाक्यपर्यवसानस्य विवक्षितत्वात् सगुणवाक्यानि निर्गुणवाक्यान्युभयं चोपासनाप्रकरणाभावे विचारविषय इति जन्मादिसूत्रे—"यतो वा इमानि" "आनन्दाद्ध्येव" इत्यनयोरिवानुपासनाप्रकरणस्थसगुणनिर्गुणवाक्यानां सर्वेषामपि समन्वयसूत्रविषयत्वात् संशब्दप्रयोगो नानुपपन्न इति सिद्धम् ॥४॥

## [५] चतुः सूत्रीसङ्गतिः ॥

अयमत्र चतुस्सूत्रीसारसंग्रहः—"अथातो ब्रह्मजिज्ञासे"ति सूत्रे भाष्यकाराः अहमर्थतयाऽत्मसिद्धिमुपपाद्य "त्माच ब्रह्मे"ति जीवात्मनः परमात्मनश्चोपाधिपरित्यागेनाभेदेन निर्विशेषजिज्ञास्यत्वं प्रतिपाद्य तदेव निर्विशेषं मायावच्छिन्नसगुणेश्वराभिन्नत्वेनोपाधिपरित्यागेन लक्षयित्वा तस्यैवोपक्रमादिना सर्ववेदान्तगम्यत्वं निरूपितमिति सर्वविदितमिदम् । तदत्र पूर्वोत्तरसङ्गति-

SGDF Sri Durgeshwari Digital Foundation

निरूपणपूर्वकं चतुःसूत्रीप्रतिपाद्यमर्थं संग्रहीतुमवसरः प्राप्त इति तत्रैव किंचिल्लेखिनीं व्यापारयामः।

"अथातो ब्रह्मजिज्ञासे"ति सूत्रेण निर्विशेषं स्वरूपचैतन्यं विगलितान्तःकरणाद्युपाधिसम्बधं ज्ञेयं प्रतिज्ञातम्। अनन्तरं च तादृशं स्वरूपं किमिति लक्षणमुखेन प्रतिपादनीयमिति निर्विशेषस्य प्रथमतः लक्षणासंभवात् सगुणं जगत्कारणत्वेनोपलक्ष्य तदभिन्नतया ब्रह्मस्वरूपमपि द्वितीयसूत्रेणोपदर्शितम्। अनेन तृतीयसूत्रमपि व्याख्यातम्। सूत्रद्वयस्यापि सविशेषोपलक्षणद्वारा निर्विशेषस्वरूपोपलक्षण एव तात्पर्यमिति न प्रथमसूत्रेणानन्तरसूत्रद्वयस्यासङ्गतिः।

इदमत्र सर्वसंविदितम्—"तत्त्वमसी"ति वाक्येन जीवब्रह्माभेदो बोध्यत इति जीवब्रह्मणोरात्यन्तिकोऽभेद एवाद्वैतसंप्रदायसिद्धान्त इति। अयं च जीवब्रह्माभेदः जीवस्वरूपनिरूपणेन ब्रह्मस्वरूपनिरूपणेनोभयोरभेदनिरूपणेन च भवति। तत्र प्रथमतः त्वंपदवाच्यार्थः अनन्तरं लक्ष्यार्थश्च विवेचनीय इति "अथातो ब्रह्मजिज्ञासे"ति सूत्रेऽहमर्थं त्वंपदवाच्यार्थं "सर्वो ह्यात्मास्तित्वं प्रत्येती" त्यादिभाष्येण प्रतिपाद्य "आत्मा च ब्रह्मे"ति भाष्येण तल्लक्ष्यार्थं भाष्यकारा विवेचयन्ति। एतेन—आद्यसूत्रेऽहमर्थे हि प्रसिद्धिः प्रतिपादिता। जिज्ञासार्थम्, इति चन्द्रिकोक्तम्—व्याख्यातम्; तत्रापि हि यदि चन्द्रिकाकाराः त्वंपदार्थशोधनमेव मन्यन्ते, तर्हीष्टापत्तिः, यदितु त्वंपदवाच्यार्थविवक्षां मन्यन्ते, तर्हि त्वपसिद्धान्तः। अत एव—"सर्वो ह्यात्मास्तित्वं प्रत्येती"तिभाष्यानन्तरं

SGDF Sri Gargeshwari Digital Foundation

"आत्मा च ब्रह्मे"तिभाष्यमुपपद्यते। तदुक्तं खण्डने—एकस्मिन्नेव जिज्ञासार्थमन्तःकरणावच्छेदेनाहमिति प्रसिद्धिरि"ति। यथाहि घटाकाशमठाकाशयोरुपाधिभेदेन विभिन्नयोरपि वस्तुगत्यैक्यम्, यथाच तत्र घटपरिमाणपरिमितत्वमठपरिमाणपरिमितत्वादिधर्मभेद एवमत्रापि विरुद्धधर्मसमावेश उपपन्न एव।

एतेन—भावाभावयोस्सहावस्थाननिर्वाहकविलक्षणावच्छेदकत्वस्यैवाप्रामाणिकत्वेन तदवष्टंभेनोक्तरीतेरनवकाशादिति—प्रकाशप्रसरोक्तम्—अपास्तम्। नहि वयं जीवेश्वरयोरप्यभेदं वदामः; किन्त्वन्तःकरणोपलक्षितमायोपलक्षितस्वरूपचैतन्याभेदमेव। एतेन—अग्रे वृक्षे कपिसंयोगी न मूले इति दृष्टान्तस्यात्रावसर एव नास्तीति—सूचितम्। नहि वयं स्वरूपचैतन्य एव समसत्ताकं सर्वज्ञत्वं तदभावं चोरीकुर्मः। एतेन—ननु कुतोऽप्रामाणिकत्वं मूले वृक्षः कपिसंयोगी नाग्रे इत्यबाधितप्रत्यक्षेण मूलाग्रयोः संयोगतदभावावच्छेदकत्वविषयीकरणादिति चेन्न; वृक्षस्य मूले संयोगो नाग्र इति प्रतीत्यनुरोधेन मूलाग्रनिष्ठसंयोगतदभावविषयत्वात् प्रतीतेरित्याद्रिप्रश्नोत्तराधिकाशंकासमाधानादिरूपः सर्वोऽपि ग्रन्थविस्तरः प्रकाशप्रसरकाराणामकाण्डताण्डवमेवेति—सूचितम्। यदि मूलोपहितवृक्षस्य संयोगाश्रयत्वमग्रोपहितवृक्षस्य तदभावाश्रयत्वमित्युपहितवृक्षभेदमादायैव तत्र संयोगतदभावादिव्यवहार इत्येकस्यैवोपाधिभेदेन स्वरूपभेदं काल्पनिकमादाय वा विरुद्धधर्माश्रयत्वव्यवहार उपपन्न इत्यत्रास्याप्युदाहरणत्वं न दुष्टम्, तर्हि नास्माकमपि काऽपि हानिः। अत्रच—एकस्यैवा-

SGDF
Sri Gargeshwari Digital Foundation

काशस्य घटमठाद्युपाध्यवच्छिन्नत्वं यादृशमङ्गीक्रियते, तादृशमेवावच्छिन्नत्वं स्वरूपचैतन्यस्याप्यूरीक्रियते। तथाच-दृष्टान्त इव युगपत् सर्वेषां जीवेश्वरशुद्धचैतन्यानामवस्थानमपि सिद्धमेव।

वस्तुतस्तु—एकस्यैवान्तःकरणावच्छिन्नत्वं भवति वा न वेत्यादिविचारो नात्र सावसरः। यतोऽद्वैतमतरीत्याऽन्तःकरणोपहितस्य प्रतिज्ञा, ईश्वरस्य लक्षणमित्येवमादिरूपेणाङ्गीकारे सूत्रासङ्गतिरेवापादिता चन्द्रिकाकारैः। तत्र चाद्वैतसिद्धान्तरीत्या जीवेश्वरादिविचारस्य नासङ्गतिरिति खलु खण्डनकारैरुक्तम्। तत्रच प्रकाशप्रसरकारैरुक्ताद्वैतसिद्धान्तानुसरणेनापि चन्द्रिकोक्तासङ्गतिसमर्थनं कथमपि कर्तुं न पार्यते। चन्द्रिकाकारा हि नात्र निर्विशेषाप्रामाणिकतादिकं मन्यन्ते, किन्तु तदङ्गीकारेणापि सूत्राणां सङ्गतिर्न भवतीत्येवेति चन्द्रिकोक्तासङ्गतिसमर्थनार्थमशक्ता एते शाखोपचङ्क्रमणसामर्थ्यमेवात्र प्रकाशयन्तीति मात्रयाऽपि शाखाचङ्क्रमणस्वरूपमेवाजानन्तो वयमत्रैवमुपसंहरामः—यदद्वैतमतरीत्यां न सूत्राणामसङ्गतिरिति।

तदयं निष्कर्षः—"अथातो ब्रह्मजिज्ञासे"ति सूत्रेऽखण्डवाक्यार्थे ब्रह्मविचारप्रतिज्ञा, तत्र संदेहोपपादनमुखेन त्वंपदार्थशोधनं च क्रियते। "जन्माद्यस्य यतः" "शास्त्रयोनित्वात्" इति सूत्राभ्यां तत्पदार्थशोधनं क्रियते। "तत्त्वमसी"ति महावाक्यार्थोपपादनं तु "तत्तु समन्वयादि"ति सूत्रेण क्रियते। एवं परिसमाप्तस्य शास्त्रस्यैव प्रपंचनं प्रधानादिव्यावृत्तजगत्कारणस्वरूपविवेचनपुरस्सरमुत्तरविभागेषु क्रियते। तत्रच "जन्माद्यस्य यतः" इत्यनेन

SGDF Sri Gangeshwari Digital Foundation

जगत्कारणं ब्रह्म निरूप्य तस्यैव निर्विशेषाभेदोऽपि प्रतिपादित इति यदद्वैतिनो मन्यन्ते, तत्रावान्तरतात्पर्यविषयं जगत्कारणं न प्रधानं कथमपि भवतीति कारणवाक्यान्तरग्रहणेन व्यवस्थापनं कृत्वा कुत्र सविशेषब्रह्मपरत्वं कुत्र च निर्विशेषतया ब्रह्म विवक्षितमिति विचारार्थमुत्तरः प्रपञ्चः। तत्रच "आनन्दमयेव" इति वाक्येन निर्विशेषं ब्रह्म बोध्यत इति पूर्वमुपपादितत्वात् तदुपपादनपरमानन्दमयाधिकरणम्। ततस्तूपासनपरेषु वाक्येष्ववान्तरतात्पर्येण निर्विशेषपर्यवसानं न विवक्षितमिति सिद्धान्तोपपादनार्थमन्तस्तद्धर्माधिकरणम्। तदनन्तरं च पादशेषेण निर्विशेषस्यैव विवेचनं तत्तद्वाक्यविशेषस्वीकारेण क्रियत इति न काप्यसङ्गतिरद्वैतमते।

एतेन—द्वितीये जगज्जन्मादिहेतुता। अविद्यमानाऽहमर्थे लक्षणत्वेन कीर्तिता। ईश्वरस्य, तृतीये तु निर्विशेषप्रमाणता। शास्त्रोक्ता चतुर्थे च तस्मिन्नेव समन्वयः। प्रतिज्ञातोऽन्तरित्यादौ सविशेषं तु कथ्यते। ब्रह्मेति मायिनां पक्षस्तत्र किं केन सङ्गतमिति चन्द्रिकोक्तमद्वैतसंप्रदायानबोधविजृम्भितमेवेति केवलं तस्यैव वाक्यान्तरेण प्रकाशप्रसरकाराणां विवरणमपि तादृशमेवेत्यलमतिविस्तरेण।

यथाच माध्वमते—रूढ्यपेक्षया योगप्राबल्यं सिद्धवत्कृत्य प्रथमसूत्रेण गुणपुर्त्यादिविशिष्टं ब्रह्मपदार्थं निरूप्य तस्यैवानुमानदुरागमाद्यपेक्षया श्रुतिप्राबल्यस्वीकारेण चोपपादनं कृत्वा शास्त्रयोनित्वसूत्रेणापि द्वितीयसूत्रेण श्रुतिप्राप्तस्यैव ग्रहणमिति सि-

SGDF
Sri Gargeshwari Digital Foundation

द्धान्तस्योपपादितस्यैव व्यवस्थापनं कृत्वा समन्वयसूत्रेऽपि पाशुपतप्रामाण्येन सिद्धान्तकरणात् सूत्रकाराणां शून्यहृदयताऽऽपाद्यते, तथा पूर्वमेव विवेचितम्। एतेनेक्षत्यधिकरणवैयर्थ्यमपि व्याख्यातम्; तत्र ह्यधिकरणे ब्रह्मणि समन्वयापरपर्यायस्य वचनवृत्त्या सर्वशास्त्रगम्यत्वस्य समन्वयः क्रियत इति हि तेषां मतम्। तत्र समन्वयस्य वादिविप्रतिपन्नत्वं तेऽपि मन्यन्ते वा नवा। आद्ये तं प्रथमतोऽप्रसाध्य समन्वयादिति हेतुत्वेन निर्देशोऽनुपपन्नः। द्वितीये त्वीक्षत्यधिकरणवैयर्थ्यमिति।

अयं भावः—समन्वयशब्देन सर्वशास्त्रसमधिगम्यत्वं यत्सूचितं तदिदमानन्दमयाधिकरणादिभिः प्रत्येकं सर्वव्याख्यानाधिकरणे सर्वतश्च स्पष्टमेव प्रतिपाद्यत इति किमर्थमिदमधिकरणम्। सर्वव्याख्याधिकरणे हि भवदीये शून्यासदादिशब्दबोध्यो विष्णुरेवेति प्रतिपाद्यत इति तेनैव गतार्थत्वादिदं व्यर्थमेव। एतेनान्तराद्यधिकरणवैयर्थ्यमपि व्याख्यातम्। शून्यासदादिपदानामिवानन्दमयादिपदानामपि सर्वव्याख्यानाधिकरणेनैव विष्णुवाचकतासिद्धेः। यदितु प्रपंचनार्थमिमान्यधिकरणानि, तर्हि कथं वा "सर्वे व्याख्याता" इति शून्यासदादिपदार्थं न पृथक् पृथक् प्रपंचार्थं नाधिकरणान्तराण्यारचितानि। अस्मन्मते तु किं सविशेषोपासनापरं किंच निर्विशेषपरमिति प्रपंचः क्रियत इति न विरोधः। तात सर्वमनवद्यम् ॥५॥

---

SGDF
Sri Gangeshwari Digital Founda

## [५] माध्वसंमतसमन्वयाधिकरणशरीरानुपपत्तिः ॥

अत्र ह्यधिकरणे माध्वाः रुद्रादिकारणता यत्र शास्त्रेषु गम्यते, तत्र सर्वत्रापि रुद्रपदेन विष्णुरेव गृह्यत इति नातिव्याप्तिरिति निरूपयन्ति। अत एव समन्वयादिति हेतुनिर्देश उपपद्यत इति ॥

इदं चात्र न निरूपणीयम्, यतः शास्त्रयोनित्वसूत्रेणैव पाशुपतादिप्रामाण्यनिरासेन रुद्रकारणता वारितेति हि नातिव्याप्तिलेशस्याप्यवसरः। वेदव्याख्यानत्वेन पाशुपतप्रामाण्याङ्गीकारेण खलु भवतां पूर्वपक्षः। इदं च पाशुपतस्य पूर्वसूत्रेण शास्त्रत्वनिरासेन शास्त्रव्याख्यानत्वस्यापि निरासादनवसरमेत्रेति श्रुतिगतरुद्रादिपदावलंम्बेनेव पूर्वपक्षः करणीयः। अत एव हि शास्त्रयोनित्वाधिकरणे चन्द्रिकायां नेह स्मृत्यवलम्बेन पूर्वपक्षो येन "स्मृत्यनवकाशदोषप्रसङ्गादि"त्यस्य पौनरुक्त्यं स्यादि"ति वर्णितमुपपद्यत इति श्रुतिगतरुद्रादिपदानामपि विष्णुपरताव्यवस्थापनमेव भवतामत्र विवक्षितमिति सर्वव्याख्यानाधिकरणेनेवास्य सङ्गतिः।

तदुक्तं खण्डने—तद्रीत्या सर्वव्याख्यानाधिकरण एवास्यार्थस्य कथनौचित्यादिति।

अयं भावः—रुद्र एव जगत्कारणमिति पूर्वपक्षे हि रुद्रपदमेकमेव श्रुतिगतं गमकम्, नत्वन्यत्। तथाच तस्य तत्परत्वं वोत विष्णुपरत्वं वेति विचार एव करणीयो नान्यः। तथाच रुद्रशब्दवा-

SGDF
Sri Gangeshwar Digital Foundation

च्यत्वमपि विष्णोरेव, तस्यैवोपक्रमोपसंहारादीनां सर्वशास्त्रगम्यत्वस्य च वर्तमानत्वादित्येवात्र वोधनीयमिति सर्वव्याख्यानाधिकरणे शून्यासदादिपदवत् रुद्रपदस्यापि ग्रहणमेव समुचितम्। यतो हि भवतां मते वेदविरुद्धत्वेन बौद्धादिस्मृतिसदृशमेव पाशुपतागमादीत्येव विवक्षितमिति तत्रैवाऽस्यमस्य विचारस्य संभवति।

एतेन—समन्वयसूत्रे जगत्कारणत्वेन शास्त्रयोनित्वं विषयः। विष्णोरेव वाऽन्यस्यापीति सन्देहः। उभयथाऽपि शास्त्रप्रतीतिर्बीजम्। रुद्रादीनामपि कारणत्वेन शास्त्रयोनित्वमिति पूर्वपक्षः। तद्व विष्णोरेवेति सिद्धान्तः। सर्वव्याख्यानाधिकरणे तु शून्यासदाद्यन्यत्रैव प्रसिद्धशब्दवाच्यं विषयः। विष्णुरन्यद्वेति सन्देहः। समन्वयसूत्रमन्यत्रप्रसिद्धिश्च बीजम्। न विष्णुरसदादिपदवाच्य इति पूर्वपक्षः। विष्णुरेवासदादिशब्दवाच्य इति सिद्धान्त इति। सति चैवमधिकरणशरीरभेदेऽन्यत्रैव प्रसिद्धशब्दसमन्वयपरसूत्रेण, कृत्स्नशास्त्रसमन्वयप्रतिज्ञापरसूत्रस्य पौनरुक्त्यमापादयन् परः कथमस्मत्सिद्धान्ताभिज्ञस्स्यादिति श्लाघनीयप्रज्ञो देवानांप्रिय इत्यादिप्रकाशप्रसरोक्तम्—अपास्तम्। यदि ह्यत्र कृत्स्नशास्त्रसमन्वय एव प्रतिपिपादयिषितः, तर्हि कथं समन्वयादिति पञ्चमीनिर्देशः? शास्त्रयोनित्वसूत्रेणापि हि कृत्स्नशास्त्रसमधिगम्यत्वमेव खलु प्रतिपादितमिति कृत्स्नशास्त्रसमधिगम्यत्वमत्र न साधनीयम्। किंच समन्वयप्रपंच एवाध्यायशेषेण क्रियत इति हि भवतां मतम्। तथाच शून्यासदादिपदानामपि विष्णवतिरिक्तवाचकत्वे तेषामपि

SGDF
Sri Gurgeshwari Digital Foundation

कारणत्वादिना शास्त्रगम्यत्वापत्तिरेव पूर्वपक्षे विवक्षितेति को वा विशेषोऽधिकरणद्वयस्य फलभेदकृत इति भवन्त एव विवेचयन्तु ॥

एतेन—विषयकृतभेदोऽपि व्याख्यातः, रुद्रपदस्याप्यन्यत्रैव प्रसिद्धत्वात् । यत्तु प्रमाणविशेषानुद्धरणपूर्वकं कृत्स्नशास्त्रसमन्वयप्रतिज्ञापरत्वमस्य सूत्रस्येति वर्णितम् । तत्रेदमेव प्रष्टव्यम्—प्रमाणविशेषानुदाहरणे कथं वा रुद्रादिकारणत्वावगमः येन रुद्रादि कारणत्वेन शास्त्रयोनित्वविषयः स्यादिति सम्यक् पाण्डित्याभिमानः प्रकाशितः प्रकाशप्रसरकारैरिति रुद्रादिजगत्कारणत्वशङ्कायाः पाशुपताद्यनुसारेण शास्त्रगतरुद्रपदाद्यनुसारेण वाऽत्र प्रसक्तिलेशस्यापि भवन्मतरीत्याऽभावात् भावेऽपि सर्वव्याख्यानाधिकरणेनैव वारणसंभवाच्च "तत्तु समन्वयादि"ति सूत्रमत्र रुद्रादिकारणतावारणार्थमनपेक्षितमिति खण्डनोक्तमुपपन्नमेवेति विस्तरभयादुपरम्यते ॥५॥ इति समन्वयाधिकरणम् ॥



SGDF
Sri Gurgeshwari Digital Foundation

# अथेक्षत्यधिकरणम्

## अद्वैतमत एवेक्षतेरिति सूत्रस्वारस्यम् ॥

समन्वयादित्यत्र संशब्देन वाच्यत्वं सर्वशास्त्रगम्यत्वमुभयं च बोधितमुपपन्नमिति बोधनार्थम्—ईक्षत्यधिकरणम् । तत्र गतिसामान्याच्चे"त्येनेन वाच्यत्वसमर्थनार्थं सर्वशास्त्रगम्यत्वमपि प्रतिपादितमिति चन्द्रिकाभिमतः सिद्धान्तः । तत्रैतावताऽपि वाच्यत्वमेव ब्रह्मणोऽसिद्धमिति यदि भवतामभिमतम्, तर्हि कथं वा ब्रह्मादिशब्देन गुणपूर्णस्यैव ग्रहणमित्यादि निर्णीतमिति भवन्त एव विवेचयन्तु । एतेन "गतिसामान्याच्चे"त्यनेन समन्वयव्यवस्थापनमित्यप्यसंगतम् । नहि तत्रापि पंचम्यन्ततयैव निर्देशमात्रेण तत्साधनं संभवति । अन्यथा समन्वयादित्यनेनैव सिद्धत्वात् व्यर्थं गतिसामान्यसूत्रम् । शाखान्तराविरोधसमर्थनार्थमिदं सूत्रमिति कल्पना हि अविरोधाध्यायसङ्गतेरेवापत्त्या न संभवति । तथाच व्यर्थमेवेक्षत्यधिकरणम् । किंच कथं वा ब्रह्मणः सगुणस्य भवन्मतेऽवाच्यत्वशंका । नहि अद्वैतमत इव निर्विशेषं भवतां ब्रह्म, शुद्धपदेन हि भवतां गुणत्रयरहितमेव खलु स्वरूपं विवक्षितम्, नाधर्मकमिति तद्वाच्यत्वाभावशंकैव नोदेति । तथाच यद्यत्रावाच्यत्वनिषेध एव कर्तव्यः स्यात्, तर्हि "ईक्षतेर्नावाच्यमि"त्येव सूत्रणीयं स्यात्, "नाशब्दमि"ति ॥

SGDF
Sri Gurgeshwari Digital Foundation

यत्तु प्रकाशप्रसरे—अवाच्यं नेति वाच्येऽशब्दमित्युक्तिरशब्दमिति श्रुत्यनुगमायेति वर्णितम्, तत्रेदं प्रष्टव्यम्—तदनुगमोऽत्र किमर्थमपेक्षित इति ? यदि पूर्वपक्षसूचनार्थम्, तर्हि नेदमुपपद्यते। नहि तत्र शब्दावच्यत्वमशब्दशब्दार्थः। अरूपमित्यादिसाहचर्येण शब्दाद्यगुणकत्वबोधनमेव हि तत्र विवक्षितम्। न हि कुत्रापि अशब्दपदेन शब्दाबोध्यत्वं श्रुतौ विवक्षितमस्ति। अस्मन्मतेतु "अशब्दमनपेक्ष" इत्यादिं त्यत्रैवाशब्दपदेन शब्दाबोध्यत्वं विवक्षितमिति नानुपपन्नम्, शब्दाबोध्यत्वं हि शब्दप्रमाणागम्यत्वमेव, नावाच्यत्वम्, स्मृत्यादिषु अष्टकादीनामपि हि वाच्यत्वं वर्तत एव। तथाच शब्दपदेन शास्त्रयोनित्वविवक्षणमेव स्वरसं भवति नावाच्यत्वम् ॥

किंचात्र सूत्रे विषयवाक्यतया किं विवक्षितमिति विचारणायां भवतामपीदमेव संमतम्—यत्तु "पुरिशयं पुरुषमीक्षते"। "मामेवैकं जानथ आत्मानम्" "आत्मन्येवात्मानं पश्येत्" इत्यादिकमिति। तत्र चेक्षणीयत्वं यदवबोधितं तदिदं वाच्यत्वोपपादकतया न विवक्षितम्। नहि तत्र वाच्यमित्यपि श्रूयते। तथाच वाक्यान्तरसिद्धेक्षणीयत्वेन वाच्यावाच्यसाधारणेन कथं वाच्यत्वसमर्थनं भवतामुपपन्नमिति भवन्त एव विवेचयन्तु।

एतेन—केवलेक्षणस्य प्रत्यक्षादिनाऽप्यसंभवेन प्रत्यक्षाद्यवेद्यत्वे सतीक्षणीयत्वस्यैव हेतूकर्तव्यत्वेन सत्यन्तलाभाय "नाशब्दमित्युक्तिः, तल्लाभश्च नाशब्दा"ति समासः, न शब्द अशब्दं शब्दभिन्नं प्रमाणत्वेन शब्दसजातीयमनुमानं प्रत्यक्षं च न विद्य-

SGDF Sri Gargeshwari Digital Foundation

तेऽशब्दं यस्येति विग्रहेण प्रत्यक्षाद्यवेद्यमित्यर्थे लब्धे तस्य हेतुगर्भतया विशिष्टार्थसिद्धिरिति प्रकाशप्रसरोक्तम्—अपास्तम्। नहि भवदभिमतेषु विषयवाक्येषु प्रत्यक्षाद्यवेद्यत्वमपि प्रतिपादितमस्ति, नवा भवन्मतेनाशब्दमित्यस्य साध्यसमर्पकस्य प्रथमान्तस्य चेक्षतेरिति पंचम्यन्तविशेषणत्वं संभवदुक्तिकम्॥

वस्तुतस्तु—दृश्यते त्वग्र्यया बुद्ध्येति प्रत्यक्षविषयत्वमपि शुद्धस्यात्मनः प्रतिपादितमिति नेक्षणीयत्वमात्मनः प्रत्यक्षाद्यवेद्यत्वसमवहितं वाच्यत्वसाधकमत्र विवक्षतुं शक्यते। एवंच वाच्यत्वासाधकत्वादीक्षतेरुक्तश्रुतिनिर्दिष्टाया "ईक्षतेर्नाशब्दमि"ति सूत्रम्, न वाच्यसमर्थनपरमिति सिद्धम्। अन्यथा कथमिति वाच्यमित्येव साध्यनिर्देशो न कृतः? तदुक्तं खण्डने—"अवाच्यमिति पूर्वपक्षे वाच्यत्वसाधकश्रुतेरेव सिद्धान्तहेतुतयोपन्यसनीयत्वेनेक्षतेर्हेतुत्वेनोपन्यसनस्य शिरोवेष्टनेन नासास्पर्शनतुल्यत्वादि"ति॥

यत्तु चन्द्रिकायामेव यद्यपि वाच्यत्वे "सर्वे वेदा यत्पदमामनन्ति" "अथ कस्मादुच्यते ब्रह्मे"ति "तत्सत्यमित्याचक्षते" "यमिन्द्रमाहुः" "तस्मादुच्यते परं ब्रह्मेति चे"त्यादिका श्रुतिरस्ति। "वचसां वाच्यमुत्तममि"त्यादिका स्मृतिश्चास्ति। तथाप्यवाच्यत्वेऽपि श्रुतेः सत्त्वात्तत्प्रतिरुद्धत्वेन श्रुतिमात्रेण न वाच्यत्वनिश्चय इति सूत्रे प्रसिद्धश्रुत्यनुग्राहकन्याय एवोक्तः। अत एव वाच्यत्वस्य श्रुतत्वादित्यस्यार्थस्येक्षतिसूत्र एव विवक्षितत्वात्, श्रुतत्वाच्चे"ति सूत्रं तत्परतया भाष्येण व्याख्यातमित्युक्तत्वात्।

SGDF
Sri Gurgadhwari Digital Library

तथाच न्यायानुगृहीतया प्रबलया श्रुत्या वाच्यत्वस्योक्तत्वादित्य-भिप्रायकत्वात्, तस्मात् शब्दादशब्दमित्यनुक्त्वा ईक्षतेनाशब्द-मित्युक्तं सूत्र इति प्रकाशप्रसरे उक्तम्, तदिदं "न वाचा न मनसा दृश्यते त्वग्र्यया बुद्ध्ये"ति श्रुतावीक्षणीयत्वस्यावाच्यत्व-साधकत्वस्यैकवाक्यतयाऽवगतत्वात् ईक्षतिन्यायानुगृहीतत्वस्य वाच्यत्वश्रुति प्रतिरोधित्वात्, "यतो वाचो निवर्तन्ते" इत्यादीनां लौकिकवाक्यविषयत्वस्य वाक्शब्दप्रयोगेणावगतत्वेन "तं त्वौपनिषदमि"त्यादिबाधकत्वस्याप्राप्तत्वाच्चानुपपन्नमेव ।

अस्तु वा कथंचिदपि भवदुक्तरीत्येक्षतिन्यायस्य वाच्यत्वश्रुत्युपष्टंभकत्वमेव, एवमपि हि अवाच्यत्वनिषेधकतया प्रथमं "शब्दात्" इति वाच्यत्वे हेतुमुपन्यस्य तदुपष्टंभकतयेवेक्षतिनिर्देशः करणीयः, न तु स्वतंत्रतया । ततश्च 'सेक्षितिशब्दान्नाशब्दमि"त्येव सूत्रनिर्देश आवश्यकः स्यादिति पर्यनुयोगः कथमप्यपरिहरणीयः ।

एतेन – वाच्यत्वस्य श्रुतत्वादित्यर्थस्येक्षतिसूत्र एव विवक्षितत्वादिति चन्द्रिकाऽपि—परास्ता । ईक्षतिपदस्य वाच्यत्वस्य श्रुतत्वादिति भवतां व्याख्याने ह्यत्र शब्दादित्येव हेतुर्विवक्षितो भवति । तथाच कथं वा श्रुत्यन्तरबाधकताप्रयोजकन्यायानुगृहीतत्वमपि सूत्रकृता सूचितमिति भवन्त एव पश्यन्तु ।

वस्तुतस्तूत्तरत्र चन्द्रिकायामेव—"श्रुतत्वाच्चे"त्यत्र" गतिसामान्यस्य श्रुतत्वादित्यपि विवक्षितत्वात्तस्यान्त्यते ति' वाक्येपिशब्दप्रयोगेण वाच्यत्वस्य श्रुतत्वादित्यपि विवक्षितत्वादिति

SGDF
Sri Gurgeshwari Digital Foundation

विवरणं सूचितम्। अत एव चन्द्रिकाप्रकाशे—"न केवलं टीकोक्तरीत्या वाच्यत्वहेतुत्वस्येत्यपेरर्थ इति विवरणमुपपद्यते। गुरुराजीयेऽपि हि ननु श्रुतत्वादित्यस्य गतिसूत्रानन्तर्यमयुक्तम्, साक्षाद्वाच्यत्वसाधकहेतुपरत्वेन द्वितीयत्वस्यैव न्याय्यत्वादित्यवतरणमुक्तचन्द्रिकावाक्यस्य यत् कृतं तदिदमपीक्षतिसूत्रे-वाच्यत्वस्य श्रुतत्वादितिवि वरणाभावमेव गमयतीति पूर्वोक्तिचन्द्रिकावाक्यं पूर्वापरविरुद्धमपीति सूचितम्। तथा चात्रसूत्रे नाशब्दमिति न साध्यनिर्देश इति सिद्धम्। अन्यथा किमिति सशब्दमिति वाच्यमिति वैत्र न सूत्रितम्। वाच्यत्वविधिमात्रेणापि ह्यवाच्यत्वमर्थसिद्धं भवत्येव।

यत्तु प्रकाशप्रसरे—वाच्यमिति वक्तव्ये—अवाच्यमित्युक्तिश्च वाच्यत्वविधिरवाच्यत्वनिषेधश्च श्रुत्यर्थाभ्यां कृतो यथा स्यादिति वर्णितम्, तदिदं वाच्यत्वविधिः श्रौत इति विनिर्णयस्यापेक्षितस्य लाभाय वाच्यमित्येव सूत्रणस्यावश्यकत्वादशब्दं नेति सूत्रणेनावाच्यत्वनिषेधस्येव श्रौतत्वसिद्धेश्च तेषामतीव व्यामोहं गमयति। यथा चास्मन्मत इव गुणमात्ररहितस्यानेककल्याणगुणेकतानस्य भगवतो नारायणस्य भवन्मते शब्दावाच्यत्वशंकैव नोदेति, तथा पूर्वमेव विवेचितमिति व्यर्थमेवैतदधिकरणं भवतां मते समापतति। अतएव पूर्वसूत्रे "तत्त्वमसि"ति वाक्यार्थव्यवस्थापनानन्तरमपि पूर्वं तत्पदार्थशोधकतया—"यतो वा इमानि भूतानि जायन्ते" इत्यादिवाक्यानामेव त्रिवक्षितत्वात् तेश्च तत्रेक्षत्याद्यभावेन प्रधानविवक्षा न क्रियत इति बोधयितुमशक्यत्वात्

SGDF
Sri Gargeshwari Digital Foundation

प्रधानमेव कारणतया तत्र विवक्षितमिति प्रधानाभेद एव "तत्त्वमसी"त्यत्रापि वाक्यार्थ इति शंकानिवारणार्थं तत्पदार्थो न प्रधानमिति व्यवस्थापनमेवात्र कर्तव्यमिति नशब्देन प्रकरणप्राप्तकारणत्वनिषेध एव सूत्रे विवक्षित इत्यकामेनाप्युपगमनीयम्। अत्रचेक्षतेरिति श्रुतिगतमर्थपरमीक्षतिपदं यत् प्रयुक्तं तेनावगम्यते "सदेवे" त्यादौ चेतनमेव विवक्षितम्, नाचेतनमिति प्रधानकारणवादनिरास एव फलति। तथाचाशब्दपदावृत्त्या अशब्दं'-प्रधानं न-न कारणं अशब्दत्वादित्येवात्र सूत्रार्थो विवक्षित इत्यस्मन्मत एव स्वारस्यम्, नशब्देन हि तस्यैव निषेधः, यस्य प्रक्रम इति पूर्वं कारणत्वस्यैव प्रक्रमात् तन्निषेध एव पर्यवस्यतीति नाध्याहारलेशोऽप्यस्मन्मते, भवन्मते तु पक्षपदाध्याहारः करणीय इति गौरवम्। अस्तु वा तत्, अशब्दं न-प्रधानं न, ईक्षतिमत्त्वादित्येव सूत्रार्थः, सर्वथा तु प्रधानकारणवादनिरास एवात्र विवक्षितः।

एतेन—अस्मन्मते पूर्वसूत्रात्तदित्यनुवर्तते। तत् ब्रह्म नाशब्दं ईक्षतेरीक्षणीयत्वादिति सूत्रार्थः। परमते तु श्रुतस्य साध्यत्वयोग्याशब्दपदार्थस्य साध्यत्वत्यागः, अश्रुतस्य कारणमित्यस्य साध्यस्य कल्पना। प्रथमप्रयोगे स्वरूपासिद्धस्य हेतुत्वोक्तिः, द्वितीयप्रयोगेणैवेष्टसिद्ध्याऽऽद्यानुमानकल्पनवैयर्थ्यमित्यादयो बहवो दोषा इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। नह्यशब्दत्वनिषेधः साध्यान्वययोग्यः; भवदभिमतस्य वाच्यत्वस्य अस्मदभिमतस्य चावाच्यत्वस्य निर्णयात्। पूर्वसूत्रे "तत्तु समन्वयादि"ति तत्पदं हि शास्त्रयोनित्वसूत्रे इव प्रकरणादेव लाभसंभवेन व्यर्थं



SGDF
Sri Gurgeshwari Digital Foundation

सदुत्तरत्र तस्य पक्षतयाऽन्वयाभावं गमयतीत्यत्राशब्दपदप्रयोगस्य पक्षपरत्वस्यैव निर्णीतत्वेन तस्य साध्यसमर्पकतैव हि सूत्रस्वारस्येन न संभवति। "आनन्दमयोऽभ्यासादि"त्यादावपि हि आनन्दमयादिपदं न विधेयसमर्पकं किन्तूद्देश्यसमर्पकमित्येव खलु भवतामपि सिद्धान्तः। अन्यथा "तत्तु समन्वयादि"त्यत्रोद्देश्यसमर्पकतयाऽऽनन्दमयोऽभ्यासादित्यत्रानुषक्तस्य तस्यैव विधेयसमर्पकत्वं कथं न विरूपं भवति? अस्मन्मतेतु व्यवधानेनानुषङ्गाभावादानन्दमयसूत्रे विधेयाध्याहार एव क्रियत इति न दोषः। तथाचास्मदुक्तरीत्या पक्षहेतूभयसमर्पकत्वमेवाशब्दपदस्याङ्गीकरणीयम्। यथाचास्मन्मत एव "गौणश्चेन्नात्मशब्दात्" इत्यादिसूत्राणामपि स्वारस्यम्, तथा सत्यवसरेऽवसरान्तरे निरूपयिष्यामः। अत्रहि गौणत्वमीक्षतिपदे विवक्ष्यत इति कल्पनैव हि स्वरसा, न गौण आत्मेति। पूर्वसूत्रे हि तत्पदेन ब्रह्मपरेण पक्षसमर्पकेण निर्गुणात्मविवक्षणमेव हि युक्तम्, नतु सगुणात्मपरत्वम्; तस्यानुषक्ततच्छब्दार्थत्वायोगात्। नहि पक्षोऽपि साध्यमिव संदिग्धः कुत्रापि दृष्टचर इति "गौणश्चे"दिति शंकैव नोदेति भवन्मते। चन्द्रिकाप्रकाशप्रसरकारादयो हि ये सूत्रान्तरेऽनिर्णितं समन्वयादिमसिद्धं "तत्तु समन्वयादि"त्यादौ हेतुतया विवक्षन्ते, सूत्रान्तरनिर्णेयं पक्षमपि पूर्वसूत्रे पक्षतया च निर्दिशन्ति, नहि तेऽद्वैतमते ये हीक्षतेर्नाशब्दमित्येकस्मिन्नेव सूत्रे स्वरूपासिद्धं प्रथमहेतुं तन्निरासकं द्वितीयहेतुं च व्याचक्षते, तत्र दूषणमापादयितुमर्हन्ति। जन्मादिसूत्रं हि नानुमानप्रदर्शनार्थम्,

किन्तु श्रुतिनिर्देशार्थमेवेति हि पूर्वमेव विवेचितमिति प्रधानकारणत्वमस्माकं प्रथमतोऽश्रौतत्वेनैव निरसनीयम्। एतेन प्रथमं केवलं प्रधानस्यानुमानिकत्वेति मतनिरासः कृतः, ततस्तु श्रुत्यवष्टंभेन तस्यापि श्रौतत्वं वर्तत इति मतनिरासाय तु द्वितीयानुमानम्। तथाचानुमानद्वयेनात्र मतद्वयनिरासस्य विवक्षितत्वात् प्रथममतेऽशब्दत्वस्य निर्णीतत्वान्न स्वरूपासिद्धिः। यत्तु कथमशब्दमित्यादि भाष्यम्? तदिदं मतान्तराभिप्रायमेवेति नास्मन्मते स्वरूपासिद्धस्य हेतुत्वनिर्देशोऽपि वर्तते। अस्तु वाऽशब्दमिति पदं साध्यपरमेवास्मन्मतेऽपि; एवमपि तत्—अशब्दं न-प्रधानं न, ईक्षतेरिति योजनेन स्वारस्यं न बाधितम्। ईक्षितेरित्यनेनेक्षितृत्वादिति विवक्ष्यते। सर्वथातु नाद्वैतमतमवहेयम्। परमतेतु यत्रात्मन ईक्षणीयत्वेन वाच्यत्वं समर्थ्यते, तत्र शुद्धस्यात्मन ईक्षणीयत्वं न सिद्धमिति स्वरूपासिद्धिरपरिहार्या।

यतु चन्द्रिकायां—सूत्रेषु आत्मशब्दतन्निष्ठमोक्षोपदेशादिभिर्ब्रह्मयस्य शुद्धत्वाभिधानादित्युक्तम्, तदिदं शुद्धवाच्यत्वविनिर्णयात् पूर्वं आत्मशब्दादिभिरपि शुद्धज्ञानोपदेशाद्ययोगादन्योन्याश्रयान्नोपपन्नं भवति। तथाच बहुभिस्सूत्रैः शुद्धात्मन एवेक्षणीयत्वं प्रसाध्यैवेक्षणेन वाच्यत्वं भवतामपि समर्थनीयमिति किमिति भवद्भिरप्यात्मशब्दादिभिरेव वाच्यत्वमेव न समर्थ्यत इत्यस्मन्मते प्रथमानुमानं द्वितीयानुमानं चोभयं सफलं चेदपि भवन्मते प्रथमहेतुवैयर्थ्यमपरिहरणीयमेव।

एतेन—त्वन्मत इव स्वरूपासिद्धं हेतुमुपन्यस्यानुमानान्तरे-

SGDF
Sri Gargeshwari Digital Foundation

णाप्रयोजकेन सूत्रेणैव तत्साधनासंभवाच्चेति,प्रकाशप्रसरोक्तमपि- परास्तम् ; भवतामपि सूत्रैरेव शुद्धात्मज्ञेयत्वस्य साधनीयत्वात्। इयान् विशेषः—अस्मन्मते सूत्रैकदेशेन हेतुसाधनम्, भवतां बहुभिः सूत्रैरिति ॥१॥

## [२] अद्वैतमतरीत्या ब्रह्मकारणत्वोपपत्तिः ॥

अस्मिन्नधिकरणेऽद्वैतिनः "जन्माद्यस्य यत" इति सूत्रेण तटस्थलक्षणलक्षितं ब्रह्म न प्रधानं, किन्तु चेतनमेवेति निरूपयन्ति. तत्रोपहितमेव यतोवेति वाक्यविषय इति पूर्वमेव विवेचितमिति तत्रेक्षणकर्तृत्वरूपहेतुसंभवः। अवान्तरतात्पर्यविषयत्वाच्च कारणत्वादीनां नाद्वैतहानिरत्र भवतीति विस्तृतमन्यत्र।

एतेन—प्रतिज्ञातस्य समन्वयस्याखण्डस्यैवात्र वक्तव्यत्वेन विशिष्टे उक्तवाक्यप्रतिपादितसत्त्वाद्ययोगेन च तदसंभव इत्यादि चन्द्रिकोक्तमनवसरमिति—सूचितम्। जगत्कारणे समन्वयप्रदर्शनेन चेतनं तदित्युपक्षिप्तम् , तदाक्षिप्य समर्थ्यत इति संगतिः। "तत्त्वमसी"ति सच्छब्दवाच्यप्रधानैक्यसंपत्तिः पूर्वपक्षे, सिद्धान्ते तु चैतन्यैक्यमिति कल्पतरूक्तिरपि तृतीयादिसूत्रेणैवास्य संगतिरिति गमयति। तत्त्वप्रकाशिकाकारा अपि हि भवदीयाः—"जगज्जन्मादिकारणत्वेन ब्रह्मैव शास्त्रस्य मुख्यार्थ इत्यभिहितम् ; उपक्रमादिना निर्णीतमुख्यार्थत्वात् , तच्च वाच्यत्व एव संभवती"ति शास्त्रयोनित्वाधिकरणेनैवेक्षत्यधिकरणस्य संगतिं कण्ठतो

SGDF Sri Gurgeshwari Digital Foundation

निरूपयन्ति। तथाच शास्त्रयोनित्वेन मुख्यसंगतिः, फलगत्या तु समन्वसूत्रेणाप्यवान्तरसंगतिरित्येव भवतामपि सिद्धान्त इत्यस्माभिरप्यखण्डसमन्वयस्य पूर्वसूत्रबोध्यत्वेऽपि शास्त्रयोनित्वादिसूत्रेणैव मुख्यसंगतिरूरीक्रियत इति न दोषः।

तत्र यथा भवन्मते जन्मादिसूत्रे विश्वकर्तृत्वं "यतो वे"ति वाक्यप्रतिपाद्यतया विवक्षितमेवमस्माकमपि तद्विवक्षितमिति तस्य केवलपरिणामिसमर्पकत्वं न विवक्षितम्, किन्तु कर्तृसमर्पकत्वमपीत्येव पूर्वपक्षस्य, तन्निरासेन सिद्धान्तस्य चात्र करणात् स्वतन्त्रकारणत्वस्यैव कर्तृत्वरूपत्वात् सूत्रे स्वतंत्रपदाभावेप्युक्तसूत्रे उपहितं कर्तृतया कारणवाक्येषु विवक्षितम्, उत प्रधानं केवलपरिणामित्वेन विवक्षितं वेत्येव विचारः क्रियत इति, चन्द्रिकाखण्डनकाराणां—इदमधिकरणं त्वचेतनस्य स्वातन्त्र्येण जगदाकारेण परिणामित्वं नास्ति अचेतनं प्रधानं न स्वतन्त्रं तदुपहितं ब्रह्मैव स्वतंत्रमित्येवंपरमि"ति वाक्यम्—"ब्रह्म च सर्वज्ञं सर्वशक्ती"ति भाष्येणेक्षत्यधिकरणोपक्रम उपहिते समन्वय इत्यवगमेनोपहितस्यात्र परिणामित्वोक्तेरसंगतत्वादि"ति वाक्यं च व्याख्यातम् ॥

अत्रच परिणामित्वपदेन परिणममानमायाऽपरपर्यायप्रधानाधिष्ठातृत्वमेव विवक्ष्यत इत्युपहितकर्तृत्वसिद्धान्तस्य पूर्वोक्तस्य न विरोधः। एतेन—अस्मिन् सूत्रे स्वातंत्र्यबोधकपदाभावेन तादृशार्थस्याप्रतीतेरिति प्रकाशप्रसरोक्तम्—अपास्तम्। नहि वयमत्र सूत्रे प्रधानाकारणत्वं ब्रह्मकारणत्वमुभयं समर्थ्यत इति वदामः,

किन्तु कारणवाक्येऽचेतनविवक्षा नास्तीति । ततश्चार्थसिद्धमिदमुपहितकर्तृत्वमिति न कोऽपि दोषः ॥

एतेन—प्रधाने कारणत्वसामान्याभावबोधनेन ब्रह्मस्वातन्त्र्यालाभादिति प्रकाशप्रसरोक्तम्—परास्तम् । यत्तु—अत्र ब्रह्मणः स्वातंत्र्यं वर्णितम्,न तत्परिणामित्वाभिप्रायम् । विशिष्टस्य स्वरूपतः परिणामित्वस्याद्वैतिभिरनङ्गीकारात्, किन्तु परिणममानमायाधिष्ठातृत्वमेवेति पूर्वमेवोक्तम् । एतेन—"विवरणे रज्ज्वाः सूत्रद्वयवत् मायाविशिष्टं जगदुपादानं मायाशक्तिमत् ब्रह्म कारणमिति वा जगदुपादानमायाश्रयतया कारणमिति मतत्रयस्योक्तत्वात्, रज्ज्वाः सूत्रे इव मायाब्रह्मणी उपादाने इति विवक्षितत्वेन प्रधानस्यापि स्वतन्त्रकारणत्वलाभात्, द्वितीये मायोपरागात् ब्रह्म विकारीति विवक्षितत्वेन नियमेनान्यसापेक्षस्य स्वातन्त्र्यायोगात्,तृतीयेंऽशोस्तन्तुं प्रतीव मायाद्वारा ब्रह्मणोऽप्युपादानतया विवक्षितत्वेन सुतरां स्वातन्त्र्यायोगात् , उक्तविवरणसंदर्भस्याभिन्ननिमित्तोपादानत्वसमर्थनार्थं प्रवृत्तस्य सविशेषविषयत्वस्यैवाङ्गीकर्तव्यत्वात्" इत्यादिप्रकाशप्रसरोक्तम्—अपास्तम्, उक्तविवरणे परिणामित्वं मायापेक्षमेव ब्रह्मण इति बोधितं चेदपि मायाप्रवर्तकत्वेन कर्तृत्वं नास्तीति न बोधितमिति विवक्षितस्य कर्तृत्वस्य नोक्तं विवरणं बाधकम् ॥

वस्तुतस्तु—प्रथमवाक्येनोपादानत्वं तदनन्तरवाक्यद्वयेन कर्तृत्वं चैवात्र बोधितमिति प्रकृतविवरणसन्दर्भो नास्माकं विरोधी, किन्त्वनुकूल एव । नहि कर्तुरपि करणाद्यपेक्षं कर्तृत्वमित्येताव-

SGDT
Sri Gangeshwari Digital Trust

ता स्वातन्त्र्यहानिः। अन्यथा कुलालादेरपि मृदाद्यपेक्षमेव घटादिकर्तृत्वमिति न स्वातन्त्र्यं स्यादिति न कोऽपि विरोधः। यत्तु आद्ये विशिष्टपरिणामित्वे विवर्तमतहानिः। विवर्तमतस्य शुद्धाभिप्रायत्वेऽपि निर्विकारश्रुतिविरोध इति प्रकाशप्रसरे—उक्तम्, तदिदं समसत्ताकविकारस्यैव विकारित्वप्रयोजकत्वान्न सावसरम्। विशिष्टे तु समसत्ताकविकार इति न विशिष्टे विकारोक्तिरयुक्ता। यथाचाद्वैतमतेऽभिन्ननिमित्तोपादनत्वं विवक्षितम्, तथाऽनुपदमेव प्रकाशप्रसरकारैरेवोक्तम्। एतेन—किंचास्य विशिष्टस्य परिणामित्वपरत्वे "तदैक्षत" इत्यादावीक्षापूर्वककर्तृत्वोक्तिरयुक्ता स्यात्; मृत्पिण्डादावुपादाने तददर्शनात्। कल्पितस्याम्बरादेरीक्षापूर्वकसृष्टत्वायोगाच्चेत्यादिप्रकाशप्रसरोक्तमद्वैत-संप्रदायानवबोधविजृंभितमिति—सूचितम्। नहि वयमानुमानिकं विशिष्टेश्वरमङ्गीकुर्मः, किन्तु श्रौतं दृष्टान्तानपेक्षमिति मृदादावदर्शनमप्रयोजकम्। कल्पितस्येत्यनेन कर्तृन्यूनसत्ताकस्येत्यर्थ एव विवक्षणीयः। एवंचाम्बरादेरपि कर्तृसमसत्ताकत्वान्नेक्षापूर्वकसृष्टत्वानुपपत्तिः। न ह्यत्र वयं प्रधानपरिणामवादं निरस्यामः, किन्तु कारणवाक्येषु केवलप्रधानविवक्षा न संभवति, किन्तु चेतनाधिष्ठितप्रधानविवक्षेत्येवेति॥

एतेन—प्रधानकारणतानिषेधपरत्वमप्यस्य सूत्रस्यायुक्तम्; त्वयाऽपि तदङ्गीकारात्, इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। इदं च परिणामित्वं कर्तृत्वसमानाधिकरणं विवरणमतेनैव, न भामतीमतेन। एतेन—भामत्यां ब्रह्मैवेक्षित्रनाद्यविद्यासचिवं जगदुपा-

SGDF
Sri Gurudeva Digital Forum

दानं शुक्तिरिव समारोपितरूप्यस्येति चैतन्योपादानमेव जगत्, भुजङ्ग इवारोपितो रज्जूपादान इत्युक्तत्वेनास्य सूत्रस्य परिणामपरत्वे तद्विरोध इति प्रकाशप्रसरोक्तम्—अपास्तम्। भामतीमते ह्युपहितमेवोपादानं शास्त्रगम्यं च, न शुद्धमपीत्यसकृदावेदितम्॥

एतेन—नच शुद्धस्य भ्रमाधिष्ठानत्वरूपोपादानत्वपरत्वमप्यस्य विवक्षितमिति शंका, "तदैक्षते" त्याद्ययोगात् इत्यादिसमाधानं च प्रकाशप्रसरकाराणां सर्वं भामतीसिद्धान्तानवोधविजृंभितमकाण्डताण्डवमेवेति—सूचितम्। सविशेषं ब्रह्मावान्तरवाक्यार्थः निर्विशेषं तु महावाक्यार्थ इत्येवाद्वैतिनां सिद्धान्त इति "तत्तु समन्वयादि"तिसूत्रितः समन्वयोऽखण्डब्रह्मण्येव, नतु सविशेष इत्यपि बहुधा निरूपितमेव॥

उपहितस्य मिथ्याभूतस्याजिज्ञास्यत्वे सिद्धे तत्र समन्वयस्याप्रसक्ततया तत्र समन्वयोक्त्ययोगात्, तत्र निर्गुणे तत्त्वमस्यादिवाक्य—सत्यज्ञानादिवाक्य-सदेवेत्यादिसत्यवाचिपदघटितवाक्यादिसमन्वयासंभवाच्चे"त्यादि प्रकाशप्रसरोक्तमनुक्तोपालंभनमसंभवदुक्तिकं चेति—सूचितम्। उक्तं ह्युपहितस्यापि सत्यत्वं वाक्यान्वयकल्पतरौ। भामतीमते हि सत्यादिवाक्यसमधिगम्यमुपहितमिति सिद्धान्तेऽपि केवलसाक्षात्कारमात्रगम्यमुपहितभिन्नं शुद्धस्वरूपमप्यूरीक्रियत इति तदभिप्रायेणैवाद्वैतस्याभिप्रेतत्वेन वाक्यगम्यसत्यत्वस्य शुद्धेभावेऽपि न क्षतिः। व्यक्तं ऽचैतल्लघुचन्द्रिकायां जडत्वनिरुक्तौ॥

एतेन—विवरणमतमपि—व्याख्यातम्; तन्मतरीत्या कारणत्वा-

SGDF
Sri Gargeshwari Digital Library

क्ये व्यावहारिकसत्त्वस्यैव विवक्षणात्। एतेन-व्यावहारिकसत्त्वस्य कथंचिल्लाभेऽपि पारमार्थिकसत्त्वायोगस्यासमाधानाच्चेत्यप्यनुक्तोपालंभनमिति—सूचितम्। यथाच "तत्त्वमसी" त्यादौ न विशिष्टैक्यपरत्वं तथाऽऽद्याधिकरण एव विवेचितम्। तदिदं सर्वमभिप्रेत्य खण्डने उक्तम्—"सदेवे"ति श्रुत्युक्तं सत्त्वमुपहितस्यापि भवति इति। तथाच चन्द्रिकायां विशिष्टपरिणामित्वबोधकं वा "सदेवे"ति वाक्यमुत तत्कर्तृत्वबोधकं वा आहो शुद्धब्रह्माधिष्ठानत्वबोधकं वेति विकल्प्यापादितानि दूषणानि नात्रावसरन्ति। विशिष्टकर्तृत्वस्यैव बोधनेन पक्षान्तराणामनङ्गीकारपराहतत्त्वात्। "यतो वे"ति कारणवाक्ये परिणामिमात्रानिरूपणस्यैवात्र व्यवस्थापनेन तु न वैयधिकरण्यमिति सर्वमनवद्यम् ॥२॥

## [३] सदीक्षेतरिति सूत्राकारायोगः ॥

जगत्कारणतया जन्मादिसूत्रलक्षितं न प्रधानमिति यत् बोधनीयं "तत्त्वमसी"तिवाक्यबोधिताखण्डसमन्वयसिद्ध्यर्थम्, तदिदं न प्रधानकारणतानिषेधमन्तरा सिद्ध्यतीति "ईक्षतेर्नाशब्दमि"ति नशब्दघटितमेव सूत्रं कर्तव्यम्। तत्र च नशब्देन कारणत्वनिषेधेऽर्थसिद्धेऽपि पक्षसूचनं हेतुसूचनमुभयं चाशब्दमिति योजनं विना न संभवतीति नाशब्दमिति सूत्ररचनमावश्यकमेव। अशब्दत्वमसिद्धमिति शंकानिवारणार्थमीक्षतिपदमिति तदपि न व्यर्थमिति सर्वेषामपि सूत्रगतानां पदानां स्वारस्यमद्वैतमतेऽवचनसिद्धमेव ॥

SGDF
Sri Gangeshwari Digital Foundation

एतेन—समन्वयपरत्वे 'आनन्दमयोऽभ्यासादि'तिवत् "सदीक्षते"रिति सूत्रं स्यादिति चन्द्रिकोक्तमनवसरमिति—सूचितम् । नहि वयमत्र सत्पदार्थविवेचनार्थमधिकरणं मन्यामहे, किन्तु चेतनमेव कारणस्वरूपमिति सर्वकारणवाक्यार्थविनिर्णयार्थम् । अत एव— "न सांख्यपरिकल्पितमचेतनं प्रधानं जगत्कारणं शक्यं वेदान्तेष्वाश्रयितुमि"ति भाष्ये वेदान्तेष्विति ग्रहणमुपपद्यते। तथाच "सदीक्षतेरि"ति सत्पदग्रहणेन सर्ववेदान्तग्रहणासंभवः सर्वविदित एव । तथाच सर्ववेदान्तसंग्रहणेन चेतनकारणतासूचनापेक्षयाऽशब्दत्वेन प्रधानाकारणत्वसूचनं लघुभूतं मनसि निधायैवेक्षतेर्नाशब्दमिति सूत्रं कृतम्। यथाचात्रानुमानद्वयविवक्षा सप्रयोजना तथाऽनन्तरप्रकरणे विवेचितम् ।

अयं भावः—यथाऽर्थाक्षिप्तं सर्वज्ञत्वं शास्त्रयोनित्वसूत्रेण वेदकारणत्वद्वारा द्रढीकृतम्, एवमत्राप्यर्थसिद्धं चेतनत्वं प्रधानकारणवादनिरासेन सूचितमिति । अत्रच मतभेदेनैवानुमानद्वयं विवक्षितमिति वर्णयिष्यत इति प्रथममशब्दत्वेन प्रधानकारणवादे निरस्ते लाघवेन मतान्तरनिरासोऽप्यत्र कृत इति "ईक्षतेरि"त्यंशमात्रनिरसनीयपूर्वपक्षनिरासार्थं पक्षसाध्यादिग्रहणेनाधिकरणान्तरं न चतुर्थपाद आपादयितुं शक्यम्। एतेन—प्रधानस्य सशब्दत्वनिरासपरत्वे तन्निरासपरचतुर्थपाद इदमधिकरणं स्यादिति चन्द्रिकोक्तमपि—परास्तम्। तदुक्तं खण्डने—"प्रधानवादिभिः परिनिष्ठितब्रह्मणः प्रमाणान्तरसिद्धतया न श्रुतिसमन्वयः, किन्त्वनुमानादिसिद्धप्रधानानुवादित्वमेवेति ब्रह्मसमन्वयाक्षेपे

SGDF
Sri Gargeshwari Digital Foundation

कृते तत्परिहारमुखेनास्याधिकरणस्य समन्वयदार्ढ्यार्थतया प्रवृत्तत्वादि"ति ॥

एतेन—ब्रह्मणः सद्विद्यागतसदादिपदबोध्यत्वं हि स्वपक्षः। स च सत् सद्विद्यागतसदादिपदबोध्यम्, तत्तु ब्रह्मैव, ईक्षतेः, इति सूत्रार्थेनापि सिद्ध्यति, येनार्थात् प्रधानानुवादित्वनिरासोऽपि भवति। सद्विद्याप्रतिपाद्यं ब्रह्मैवेति सिद्धौ प्रधानस्य कारणवाक्यप्रतिपाद्यत्वाभावरूपाशब्दत्वस्यापि सिद्धत्वादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। सर्ववेदान्तप्रतिपाद्यत्वं ब्रह्मण एवेति खलु स्वपक्षः। तच्च "सदीक्षतेरि"ति सूत्रणमात्रेण न सिद्ध्यति, किन्तु प्रधानाद्यशब्दत्वेनैवेति सर्वविदितमिदम्।

वस्तुतस्तु—सर्ववेदान्तप्रतिपाद्यं ब्रह्मेत्यपि नास्माकमत्र स्वपक्षः। शास्त्रयोनित्वसूत्रद्वितीयवर्णकेनैव तस्य लाभात्, किन्तु सर्वशास्त्रगम्यं जगत्कारणं ब्रह्म न प्रधानमिति व्यवस्थापनमेव। तच्च "सदीक्षिते"रिति सूत्रणेऽपि सत् प्रधानं नेति विवरणेनैव संपादनीयमिति सत् नेक्षतेरिति सूत्रणमेवाऽऽपादनीयम्। तत्र चानुमानिकप्रधानवादनिरासस्याशब्दत्वेन निरास एव उपपन्न इति श्रुतौ प्रधानविवक्षा न भवतीति खण्डनेऽशब्दत्वमेव हेतुतामर्हति, सर्ववेदान्तवाक्यावगतब्रह्मरूपत्वाभावस्येक्षतिहेतुना साधयितुमशक्यत्वादिति सत्पदस्योपलक्षणताङ्गीकारेणापि सत् नाशब्दमित्यवश्यं सूत्रणीयम्। ईक्षतिहेतूपन्यासश्चाशब्दत्वसमर्थनार्थो यद्यपि चतुर्थपादेऽपि योग्यः, एवमपि लाघवादत्र तदुपन्यास इति पूर्वमेव विवेचितम्।

SGDF
Sri Gangeshwar Digital Foundation

एतेन—सदादिपदबोध्यम् न प्रधानम्, ईक्षतेरिति द्वितीयानुमानेनैव विवक्षितार्थस्य सर्वस्य सिद्धौ प्रधानं न जगत्कारणतया वेदान्तप्रतिपाद्यम्, अशब्दत्वादिति स्वरूपासिद्धहेतुकाद्यानुमानस्य व्यर्थत्वादुक्तरीत्या "सदीक्षतेरि"ति सूत्रं स्यादित्यापत्तिर्दुर्वारैवेति प्रकाशप्रसरोक्तम्—परास्तम्। नह्यशब्दत्वमसिद्धमिति प्रधानानुमानिकतावादिमते संभवति, किन्तु तत्सशब्दतामत एवेति मतान्तरेऽशब्दत्वमेव साध्यम्, नेक्षतिहेतुकम्, न जगत्कारणब्रह्मभिन्नत्वम्, तस्य पूर्वानुमानेनैव सिद्धत्वात्। तदत्र द्वितीयानुमानप्रयोगः—प्रधनं अशब्दं नेक्षतेरिति। नशब्दस्य हि नायकमणिवदीक्षतेरित्यनेनापि सम्बंधो विवक्ष्यते। "कारणस्येक्षितृत्वश्रवणादि"ति भाष्येण तु कारणवाक्यं न प्रधानपरम्, चेतनान्वयीक्षणबोधकेंक्षतिमत्त्वात् इत्यनुमानप्रयागो विवक्षित इति केचिन्मन्यन्ते। सर्वथातु—प्रधानं कारणवाक्याप्रतिपाद्यम्, ईक्षतेरिति द्वितीयानुमानविवक्षायां पुनश्च हेतोः स्वरूपासिद्धे दुर्वरित्वात् इति प्रकाशप्रसरोक्तमनुक्तोपालंभनमेव॥

यत्तु प्रकाशप्रसरे—सद्विद्याप्रतिपाद्यं कारणं न प्रधानम्—ईक्षतेरिति विवक्षायां तु प्रथमानुमानवैयर्थ्यात् "सदीक्षतेरि"ति सूत्रं स्यादित्यापादनं निराबाधमेवेति—उक्तम्, तदप्युक्तरीत्याऽनुक्तोपालंभनमेव। यथाचोक्तप्रधाननिरासो विना नशब्दं न भवति, तथा पूर्वमेव सूचितम्। यत्तु प्रकाशप्रसरे—अशब्दमिति प्रथमान्तस्य न हेतुसमर्पकत्वम्, नवा सूत्रे प्रधानबोधकं पदं वर्तत इति चोक्तम्, तदिदमावृत्त्याऽशब्दपदस्यैव प्रधानरूपपक्षसमर्पकत्वस्य हेतुसमर्पकत्वस्य चान्यत्रोक्तत्वादनवसरमेव।

SGDF
Sri Gurgeshwari Digital Foundation

एतेन—प्रथमान्ततयाऽशब्दपदप्रयोगे निमित्तमपि-सूचितम् ॥

अशब्दपदेन च "अशब्दमनपेक्षं स्यादि"त्यादाविवानुमानिकमित्यर्थो विवक्षित इति प्रधानसंग्रहः सांख्यमतसंग्रहो वा नानुपपन्नः। एतेन—सांख्येन प्रधानस्याशब्दत्वानङ्गीकारेण कथंचिदपि तन्मतेऽशब्दशब्दस्य प्रधानपरत्वायोग इति प्रकाशप्रसरोक्तम्—अपास्तम्। नहि सांख्यमते प्रधानमनुमानानपेक्षशब्दमात्रगम्यम्, नह्यत्राशब्दपदेन शब्दगुणराहित्यं विवक्षणीयम्, अतिप्रसङ्गात्, येन सत्कार्यवादानुसारेण प्रधानस्यापि सदात्मत्वमेव स्यात्, किन्तु शब्दप्रमाणागम्यमेव, शास्त्रयोनित्वसूत्रेण तस्यैव प्रक्रमात्। नह्यस्मन्मते भवन्मत इव "अशब्दमस्पर्शमि"ति वाक्यसंग्रहोऽपेक्षितः। तथाचा "शब्दमस्पर्शमि"ति श्रुतिसंग्रहार्थमेवात्राशब्दपदमिति भवतामशब्दपदेन शब्दवाच्यत्वविवक्षानौचित्येऽपि नास्मन्मते कोऽपि दोषः प्रसरति। यथाचात्रोपहितं ब्रह्मैव विवक्षितम्; तत्रच मुख्यमीक्षणं संभवति, तथा पूर्वमेव विवेचितमिति "ईक्षारूपस्यात्मनः स्वरूपेण मुख्येक्षणासंभवात्, गौणेक्षणस्य प्रधानेऽपि तुल्यत्वादि"-त्यादि प्रकाशप्रसरोक्तमनुक्तोपालंभनमेव। यथाच निर्विशेषब्रह्मणो मुख्यवृत्त्याऽपि शब्दबोध्यत्वं संभवति आकाशादेरिव, तथा पूर्वमेव विवेचितम् ॥

एतेन—शुद्धस्य सदादिपदवाच्यत्वोक्तिरयुक्तेत्यादि प्रकाशप्रसरोक्तम्—अपास्तम् ॥

एतेन—द्वितीयसूत्रमपि—व्याख्यातम्। तत्र ह्युपहितस्यैव ग्रहणमित्यात्मशब्दवाच्यत्वमक्षतमेव ॥ एतेन—तत्रात्मशब्दवाच्य-

SGDF Sri Gurgeshwari Digital Foundation

त्वं हेतुश्चेदसिद्धिः, सदेवेतिवाक्यतात्पर्यविषयत्वेनाभिमते ब्रह्म-णि शुद्धे वाच्यत्वानङ्गीकारादित्यादि प्रकाशप्रसरोक्तम्—अपा-स्तम्। सदेवेतिवाक्य उपहितस्यैव विषयत्वेनानुक्तोपालंभन-त्वात्॥ एतेन—तृतीयसूत्रमपि—व्याख्यातम्॥

"तन्निष्ठस्य मोक्षोपदेशादि"ति सूत्रं हि भगवत्पादैः—"न प्राधान-मचेतनमात्मशब्दालम्बनं भवति; स आत्मेति प्रकृतं सदणिमानमा-दाय "तत्त्वमसि श्वेतकेतो" इति चेतनस्य श्वेतकेतोर्मोक्षयितव्य-स्य तन्निष्ठतामुपदिश्य मोक्षोपदेशात्। यदि ह्यचेतनं प्रधानं तद-सीति ग्राहयेत्–मुमुक्षुं चेतनं सन्तमचेतनोऽसीति, तदा विपरीत-वादि शास्त्रमप्रमाणं स्यादि"ति—व्याख्यातम्॥

अनेन सच्छब्दार्थत्वमचेतनस्य न भवतीत्यत्रोच्यते, नतु सत्प-दार्थज्ञानमात्रेण मोक्षसिद्धिरिति सत्पदेन विशिष्टग्रहणं नानुपपन्नम्। उक्तं हि जन्माधिकरण एव कारणत्वांशप्रहाणेन स्वरूपमात्रमा-नन्दत्वादिकमेवानन्दादिवाक्यगम्यमिति तत्त्वमसीत्यत्रापि कार-णत्वांशप्रहाणेन तत्पदार्थग्रहणं यदपेक्षितं तदिदमचेतनकारण-तायां न संभवतीत्येवात्र वाक्यार्थः। अत्रहि कारणाभेदोपदेशः कार्यस्य मोक्षोपयोगितया यत्क्रियते, तदिदं कारणवाक्यगतात्मप-देन चेतनविवक्षां गमयतीति निष्कृष्टोऽर्थोऽवगम्यते॥

यत्तु प्रकाशप्रसरे—त्वन्मते "तत्त्वमसि श्वेतकेतो" इति शुद्ध-चैतन्यनिष्ठस्यैव साक्षान्मोक्षोपदेशादित्यर्थोक्तेः सदादिपदबोध्यं शुद्धमेव ब्रह्मेति वर्णितम्, तदिदमनेनास्मन्मतस्वरूपाज्ञानमेव गम-यति। नहि वयं सत्पदार्थज्ञानात् मोक्षं वदामः, किन्तु तत्कार-

SGDF
Sri Gargeshwari Digital Found

णत्वांशप्रहाणेन जीवाभिन्नत्वेन स्वरूपचैतन्यविज्ञानादिति तत्त्वमसिवाक्येन तत्पदार्थतया प्रधानं कारणत्वांशप्रहाणेन न विवक्षितमित्यङ्गीकरणीयम्। तच्च कारणत्वोपलक्षितं चेतनमित्यङ्गीकारं विना न संभवतीत्येवास्मत्सिद्धान्तात् सत्पदार्थो विशिष्टचैतन्यमित्यङ्गीकारेऽपि न दोषः। एतेन—तन्निष्ठस्येति सूत्रे तच्छब्दार्थः शुद्ध आत्मा वा विशिष्टो वेत्यादिविकल्पतद्दूषणादीनां प्रकाशप्रसरोक्तानां नावसरलेशोऽपीति—सूचितम्॥

तत्पदेन कारणत्वोपलक्षितस्वरूपचैतन्यस्यैव विवक्षणेन तदुपलक्षितज्ञानस्य तद्विशिष्टज्ञानपूर्वकत्वात् तद्विशिष्टसमर्पकं सत्वाक्यं चेतनपरमित्यङ्गीकरणीयमिति न दोषः। तत्पदेनाचेतनमेव विवक्ष्य तन्निष्ठैवोपदिश्यत इति कल्पनातु तदैव स्यात्, यदि न "तत्त्वमसी"त्येवोपदेशपर्यवसानम्, किन्तु स्थूलारुंधतीन्यायेन प्रथमाद्युपदेशस्येवापर्यवसानमेव तस्येति भवेत्, नैतदस्ति; अन्यथा हि हेयत्ववचनमारुन्धत्यादिवाक्य इवात्रापि स्यात्; नचेदमुपलभ्यत इति तत्पदेन चेतनविवक्षैव युक्तेति चतुर्थसूत्रेण बोध्यते॥

अयं भावः—"स आत्मेति सदणिमानमादाय तत्त्वमसीत्युपदेशादि"तिवदता भाष्यकारेण हि न प्रधानातिरिक्तचेतनकारणान्तरं तत्त्वमसिवाक्यात् पूर्वं प्रकृतमिति सूच्यते। तथाच प्रधाननिष्ठत्वमेव मोक्षसाधनमिति सांख्येन वक्तव्यम्। न चेदं सङ्गतम्। सांख्या हि प्रकृतिपुरुषविवेकमेव मोक्षसाधनं मन्यन्ते, न तदभेदविज्ञानापरपर्यायतन्निष्ठामिति तत्त्वमसिवाक्यप्रामाण्यरक्षणं स-

SGDF
Sri Gangeshwari Digital Foundation

त्पदेन प्रधानविवक्षायां न संभवति ॥ नहि अन्नमयवाक्यानन्तरम"न्योऽन्तर आत्मे"त्युत्तरोत्तरब्रह्मोपदेशवत् सद्वाक्यानन्तरं चेतनकारणान्तरं निरूपितम्, न वा हेयत्वं प्रधानस्य शब्दत उक्तमिति ॥ एतेन-तत्रोत्तरोत्तरब्रह्मत्वज्ञापिकेतिसुवचमित्यादि प्रकाशप्रसरोक्तम्-अपास्तम्; उक्तरीत्या गौणेक्षणवत् गौणसंकल्पेन "बहुस्यामि" ति वाक्येऽपि प्रधानस्यैव ग्रहणापत्त्या ब्रह्मान्तरज्ञापनासंभवात्, अन्नमयादिस्थल इवान्यशब्दाभावात्। नहि निरुपाधिब्रह्मनिरूपणानन्तरं "बहु स्यामि"ति परिणामोक्तिर्वर्तते ॥

एतेन—स्वाप्ययादिति पंचमसूत्रमपि—व्याख्यातम्। अत्र ह्यप्ययशब्देन स्वरूपत्वप्रतिपत्तिर्विवक्ष्यते। घटादयो हि कपालादिस्वरूपत्वमेव प्रतिपद्यन्ते लयकाले। सा च जीवस्य यदि प्रधाने, तर्हि नोपपन्नम्। नहि चेतनस्याचेतनस्वरूपत्वप्रतिपत्तिः संभवति। तथाच लयकारणस्येवोत्पत्तिकारणस्यापि चेतनत्वमेवोरीकर्तव्यम्। नहि सांख्या अपि सुषुप्तौ स्वरूपापत्तिं मन्यन्ते। तथाचोक्तश्रुत्युपपत्त्यर्थं नात्र प्रधानग्रहणं युक्तम्। अत्रच सुषुप्तौ जीवस्यान्तःकरणोपहितस्योपाधिविलयेनाविद्योपहितभाव एव विवक्ष्यते, न शुद्धब्रह्मभावः ॥

एतेन—गतिसामान्यसूत्रमपि—व्याख्यातम्। अनेन हि नैवं प्रकरणविशेषमवलम्ब्यैकस्येक्षत्यादेरुपपत्त्यर्थं चेतनकारणवादः स्वीक्रियते, किन्तु सर्ववेदान्तप्रामाण्यसंरक्षणायेति बोध्यते। तथाच सर्वेषां वेदान्तानामप्रामाण्यमापद्येत, यदि प्रधानकारणवादः स्यादिति निष्कर्षः ॥

SGDF
Sri Gargeshwari Digital Foundation

अयं भावः—वेदान्तानामनुमानावगतकारणविषयत्वमेव यदि स्यात्, तर्हि अनुमानानामव्यवस्थितानां प्रधानाणुचेतनेश्वरादिपक्षाणां बहूनां सत्त्वाद्व्यवस्थयैव वेदान्तेष्वपि कारणस्वरूपं निर्दिष्टं भवेत्, नचैतदस्ति। अतोऽनुमानावगतप्रधानपरत्वं न वेदान्तानां युक्तमिति। एवंचानुमानिकप्रधानानुवादित्वं वेदान्तानां नास्तीत्येवात्र विवक्षितम्। एतेन—ब्रह्मकारणताविषयगतिसामान्यस्य परं प्रत्यसिद्धत्वात् ईक्षणादिना तद्ज्ञापने प्रथमसूत्रेण गतार्थत्वादिति प्रकाशप्रसरोक्तम्—अपास्तम्॥

अत्रेदं विचारणीयम्—कथमिदमुच्यते सांख्यं प्रत्यसिद्धत्वमिति। नहि सांख्याः सर्वेषामप्यात्मचेतनज्ञानादिपदानां कारणवाक्यगतानामप्रामाण्यं वक्तुमर्हन्ति। तथाच स्वीयाचेतनप्रधानानुवादित्वं बहूनां वेदान्तानां कुत्रापि लक्षणां विना न वक्तुं शक्यमिति वेदान्तानामानुमानिकातिरिक्तविषयत्वमवश्यमङ्गीकरणीयम्॥

एतेन—सप्तमसूत्रमपि—व्याख्यातम्। सर्वथा तु नाद्वैतिनामीक्षत्यधिकरणस्वरूपमवद्यमिति सिद्धमित्यलमतिविस्तरेण। सर्वथातु "सदीक्षतेरिति" सूत्रविन्यासो नात्र समुचितः॥

यथाच माध्वसंमतमुक्ताधिकरणशरीरमपि न सङ्गतम्, तथा बहुधाऽद्वैतदीपिकायां सूचितमिति विस्तरभयादुपरम्यते॥२॥

इति ईक्षत्यधिकरणम्॥





SGDF
Sri Gangeshwari Digital Foundation

# आनन्दमयाधिकरणम् ।

## [१] अद्वैतमत एवोक्ताधिकरणस्वारस्यम् ॥

पूर्वस्मिन्नधिकरणे कारणत्वादिपरित्यागेन तत्पदार्थाभेदं जीवब्रह्माभेदोपपादकं निरूप्य त्वंपदार्थजीवगतान्तःकरणादिपरिहाणेन त्वंपदार्थाभेदं तादृशमुपपादयितुमस्याधिकरणस्य प्रवृत्तिरिति समन्वयाधिकरणेन सङ्गतिर्वर्तत इत्यध्यायसङ्गतिरस्याविकला । पादसङ्गतिरपि—"असन्नेव स भवती" त्यविज्ञेयत्वलिङ्गस्य ब्रह्मासाधारणस्यात्र वर्तमानत्वादेतेन व्याख्याता । श्रुतिसंगतिरधिकरणसंगतिश्चावसररूपेत्यध्यायसंगतिनिरूपणसमय एव सूच्यते स्म । इदंच सर्वं आनन्दमयशब्देन तत्पर्यायगतपुच्छब्रह्मप्राधान्यविवक्षायामेव संभवति, नानन्दमयपदार्थमुख्यताविवक्षायाम् । वाक्यसमन्वयविचारो हि प्रथममापतित इत्यानन्दमयपदेन तद्वाक्यमेवात्र विवक्षणीयम् । एतेन—"आकाशस्तल्लिंगादि"त्यादिकमपि—व्याख्यातम् । तथाचानन्दमयवाक्यस्य पुच्छब्रह्मवाक्येनैकवाक्यता वा, उत पुच्छवाक्यस्यानन्दमयवाक्येनैकवाक्यतावेति संशयनिरासार्थमेवेदमधिकरणमित्यवश्यमूरीकरणीयम् ॥

आनन्दतीर्थमतेतु ईक्षत्यधिकरणेन आनन्दमयाधिकरणस्य न श्रुतिसंगतिः संभवति । एतेन—पादसंगतिरपि—व्याख्याता । अन्यत्र प्रसिद्धानां नाम्नां खलु प्रथमपादे समन्वयः संपाद्यते, नचानन्दमयपदं यौगिकं नामतामर्हति । अत्रचानन्दादिब्रह्मतानिर्णये-

SGDF
Sri Gurgeshwari Digital Library

नानन्दादिपदानामप्यर्थतो ब्रह्मपरत्वनिर्णयो वर्तते चेदपि सूत्रे "आनन्दमय" इत्यानन्दमयशब्दप्रयोगः कथमपि नोपपद्यते। एतेन—आनन्दादिनामसमन्वयस्यापीह समर्थनीयत्वात् फलतः पादसंगतिरिति चन्द्रिकोक्तम्—अपास्तम्। यत्पदवाच्यत्वं हि समर्थनीयं ब्रह्मणस्तस्यैव खलु सूत्रे शब्दत उपादानं कर्तव्यम्, यथाऽऽकाशप्राणज्योतिरादिशब्दानाम्। नचानन्दादिशब्दवाच्यत्वं सन्दिग्धम्। यत्तु चन्द्रिकायां—आनन्दमयोदाहरणे विकारशब्दादिपूर्वपक्षस्य तद्योगमिति सिद्धान्तबीजस्य च सत्त्वाल्लिंगस्य मुखतः कीर्तनमिति वर्णितम्, तदिदमानन्दमयावाच्यत्वपूर्वपक्षादिबीजमित्येवोरीकर्तव्यम्, नानन्दशब्दावाच्यत्वपूर्वपक्षादिबीजमिति सर्वविदितम्। तथाच सूत्र अनन्दमयपदप्रयोगस्य नामपादत्वे प्रथमपादस्योपपत्तिर्न भवति।

एतेन—अन्तरधिकरणस्यापि न पादसंगतिर्भवदभिमता संभवतीति—सूचितम्। एतेन—यथा चान्तरधिकरणस्य मुखतो लिंगसमन्वयव्युत्पादकत्वेऽपि फलतो नामसमन्वयव्युत्पादकत्वान्नामपादसंगतिरिति सिद्धवदनुवादेन दृष्टान्ततोक्तिरपि—परास्ता। अस्मन्मतेतु आकाशप्राणज्योतिरादिपदमिवान्तस्त्वमपि पूर्वपक्षसूचकमिति न दोषः। व्यक्तं च न्यायरक्षामणौ "आनन्दमयोऽभ्यासादि"ति सूत्रस्वारस्यमद्वैतमत एवेति विवेचितमस्माभिश्चास्मदीयब्रह्मसूत्रभाष्यभूमिकायामिति न विस्तरार्थमत्र प्रयतामहे। सर्वथातु आनन्दमयपर्यायविचारपरमेवेदमधिकरणमिति सिद्धम्॥

तदिदं सर्वसिद्धम्—यत आनन्दमयपर्यायेणेव ब्रह्मोपदेशपर्य-

SGDF
Sri Gangeshwari Digital Foundation

वसानं संवृत्तमिति । तत्रच—"तस्माद्वा एतस्मादात्मन आकाशः संभूत" इति सृष्ट्युपक्रमपूर्वकं "स वा एष पुरुषोऽन्नरसमयः" इति "कार्यत्वेनान्नमयादीनामात्मत्वोपदेशः "इदं पुच्छं प्रतिष्ठे"ति प्रतिष्ठात्वेनापि निर्देशश्च किमर्थं क्रियते ? यदि पुच्छत्वसंपादन-मात्रं कर्तव्यम्, तर्हि "अयं दक्षिणः पक्षः" "अयमुत्तरः पक्षः" इतिवदिदं पुच्छमित्येतावन्मात्रेण सिध्यतीत्यवश्यं कार्यस्यान्नम-यादेराधारत्वेन पुच्छत्वेनात्मस्वरूपमत्र विवक्षितमिति वक्तव्यम् । तथाचान्नमयाधिकरणं तल्लयाधिष्ठानं च ब्रह्मपदार्थ इत्येवात्र विव-क्षितम्। अत एव-भृगुवल्ल्यां-"अन्नं ब्रह्मेति व्यजानादि"त्यादिप-र्यायेषु सर्वत्र लयकारणत्वमपि प्रतिपादितमुपपद्यते । एवंच—आ-त्मकार्यशरीरावच्छिन्नं तादृशप्राणावच्छिन्नं तादृशमनोवच्छिन्नं तादृशविज्ञानावच्छिन्नं तादृशानन्दावच्छिन्नं च कार्यमात्मानमुप-दिश्य तन्मुखेन सर्वाधिष्ठानतया विगलितसर्वोपाधिसर्वाधिष्ठान-स्वरूपचैतन्यविवक्षैवात्र क्रियत इत्यकामेनापि प्रतिष्ठापदस्य प्रति-पर्यायं प्रयोगस्वारस्यार्थमूरीकरणीयम् ॥

आनन्दमयपर्यायेणैव ज्ञेयं ब्रह्म समर्प्यते,नान्यत्रेति पर्यायान्त-रेषु संशयाभावात् "आनन्दमय"इत्येव सूत्रणं कृतम् । अन्यथा प्रतिपर्यायं ब्रह्मविवक्षायां "अन्नमयोऽभ्यासादि"त्येव खलु सूत्रणी-यं स्यात्; प्रथमातिक्रमे कारणाभावात् ॥

अयं भावः—प्रतिपर्यायं "इदं पुच्छमि"त्यन्तेन पक्षिरूपेणात्मा-नमुपपाद्य तस्य पक्षिणः प्रतिष्ठा यत् तद् ब्रह्मेति ज्ञेयब्रह्मस्वरूप-निरूपणं क्रियत इत्यङ्गीकरणीयम् । तत एवानन्तरं "तस्माद्वा एत-

SGDF Sri Gargeshwari Digital Founda

स्मादन्योऽन्तर आत्मे"त्युपदेशोऽप्युपपद्यते, अन्यस्य प्रतिष्ठारूपस्य प्रतिपर्यायं सूचनात्। आनन्दमयवाक्ये तु पक्षित्वेनोपक्रान्तस्य ब्रह्मण एव पुच्छत्वेन कीर्तने कृते तस्यापि प्रतिष्ठान्तरं वर्तत इति शंकैव नोदेष्यति; " स्वे महिम्नि प्रतिष्ठित" इतिवत् तस्याधिष्ठानान्तरशून्यत्वबोधनात्। यत्तु प्रतिष्ठितमन्नमयादिकं तदसत् मिथ्येति सूचितमिति ब्रह्मणोऽपि प्रतिष्ठान्तरशंकानिरासार्थमेवोत्तरश्लोके" असन्नेव स भवती"ति वाक्यं प्रवृत्तम्। अनेन हि ब्रह्मणोऽसत्त्वनिषेधेन प्रतिष्ठान्तरं नास्तीति स्पष्टमेवावगम्यते॥

एवंचान्नमयादिपर्याय इवानन्दमयपर्यायेऽपि ज्ञेयब्रह्मसमर्पणं " ब्रह्म पुच्छं प्रतिष्ठे"त्यनेनैव क्रियत इति प्रतिष्ठापदस्वारस्यार्थमवश्यमङ्गीकरणीयम्॥

तत्र पूर्वपूर्वपर्यायेषु " अन्योऽन्तर आत्मे"ति निर्देशादसन्देह इत्येव—" आनन्दमयोऽभ्यासादि"ति सूचितम्। न ह्यत्रा"सन्नेव स भवती"ति प्रतिष्ठान्तरनिषेधवत् पूर्वतनपर्यायेषु तन्निषेध उपलभ्यते। अन्यथा"ऽन्नमयोऽभ्यासादि"ति खलु सूत्रमपक्षितं स्यात्। एवंच "एष तु वा अतिवदति यत्सत्येनातिवदती" त्यत्र प्रश्नोत्तरक्रमेण प्रवृत्तस्योपदेशस्य शैल्यन्तरेण पर्यवसानवदत्रापि"अन्योऽन्तर आत्मे"तिशैलीपरित्यागेन पर्यवसानमपि न दोषायेति सिद्धम्। सर्वथा च—" आनन्दमयोऽभ्यासादि"ति सूत्रं ज्ञेयनिर्गुणब्रह्मस्वरूपोपदेशपर्यवसानविषयानन्दमयपर्यायविषयमित्यङ्गीकरणीयमिति तत्र "ब्रह्म पुच्छमि"त्यनेनैव निर्विशेषस्य समर्पणात् पूर्वस्य चानन्दमयस्य शिरःपक्षाद्यवयवयोगेन सावयवत्वेन सविशेषत्वादु-

SGDF
Sri Gargeshwari Digital Foundation

क्तसूत्रविषयः "ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्यमेव। तदुक्तं भामत्याम्—"ब्रह्म पुच्छं प्रतिष्ठेति ब्रह्मशब्दात् प्रतीयते। विशुद्धं ब्रह्म, विकृतं त्वानन्दमयशब्दतः॥"इति। तथाच ब्रह्म पुच्छमिति वाक्यमेव, उपक्रान्तब्रह्मसमर्पकम्, ब्रह्मपदाभ्यासादित्येवात्र सूत्रार्थः॥

यत्तु खण्डने—ब्रह्म पुच्छमित्यत्र श्रुतं स्वप्रधानमित्युक्तम्, तदिदं फलितार्थकथनपरम्, न सूत्रार्थप्रदर्शनपरम्। अस्तुवा पुच्छवाक्योक्तं ब्रह्मैव पक्षीकृत्य उपक्रान्तज्ञेयाखण्डब्रह्मरूपत्वं साध्यमिति। एवमपि न दोषः। एतेन—किमत्र पुच्छतयोक्तं ब्रह्म पक्षीकृत्याप्रधानत्वाभावः साध्यते, किंवाऽऽनन्दमयावयत्वाभावः, नाद्यः; तत्त्ववादिमते आनन्दमयतदवयवयोरुभयोरपि परिपूर्णत्वरूपब्रह्मत्वस्य संमतत्वेन सिद्धसाधनात्। न द्वितीयः; पुच्छमिति पदोपात्तावयवत्वस्य श्रुतत्वेन तद्बाधितत्वादिति प्रकाशप्रसरोक्तम्—अपास्तम्। अतत्त्ववादिमते पुच्छब्रह्मणि उक्तरूपाखण्डरूपत्वस्यासिद्धत्वात्, आनन्दमयावयवत्वस्य श्रुतस्यापि तात्पर्याविषयत्वेनाबाधात्॥

एतेन—"आनन्दमयस्तद्धर्मात्" इत्यसूत्रणेना"भ्यासादि"तिहेतुनिर्देशोऽप्यस्माकमेव स्वरसः। अभ्यासो हि तात्पर्यलिङ्गं यथाश्रुतार्थविवक्षा नात्र वर्तत इति सूचनार्थमिति विवरणमेव हि युक्तम्। एतेन—अन्नमयादिपर्यायवदवयवपरत्वेन चतुः प्रकरणीप्रायपाठविरोधात् इत्यादिप्रकाशप्रसरोक्तम्—अपास्तम्; नहि तत्रापि पुच्छपदेनावयवत्वविवक्षा नास्तीति गमकं किमपि तात्पर्यग्राहकं वर्तते॥

SGDF
Sri Gargeshwari Digital Foundation

वस्तुतस्तु—अन्नमयादिष्वपि पुच्छत्वादिकं कल्पितमेव, न परमार्थसदिति ब्रह्मण आनन्दमयावयवत्वं वस्तुसदिति न प्रकरणपर्यालोचनेनापि संभवति। नह्यानन्दमयस्य ब्रह्म पुच्छावयव इति भवतामपि मतम्, अन्यथा पक्षिरूप्येव परमात्मेत्यापत्तेः। अस्तु वा कथमपि भवतां परमात्मा, एवमप्येकस्यैवावयवावयिभावो न संभवति। विशेषबलात् सर्वं साधयतामपि भवतां मते चतुःप्रकरणीप्रायपाठमेव प्रमाणतया स्वीकुर्वाणानामत्रैकस्यैवावयवावयिभावो न विवक्षितुं शक्यम्। नहि पूर्वतनपर्यायेष्वप्यवयवावयविनोरैक्यं भवतामपि संमतम्। तदुक्तं चन्द्रिकायां—"अथर्वाङ्गिरसः पुच्छं प्रतिष्ठे" त्युक्तमनोमयपुच्छस्य ब्रह्मत्वानङ्गीकारादि"ति। पञ्चब्रह्मवादिनां भवतां हि मते पूर्वतनपर्यायेषु स्वभिन्नस्यावयवत्वमेकत्रापरत्र स्वस्यैवावयवत्वमिति कल्पनं भवदीयप्रायपाठविरुद्धमेव॥

एतेन—आनन्दादीनामप्यत्र ब्रह्मरूपत्वं विवक्षितमित्यानन्दादिनामविषयत्वमुक्ताधिकरणस्य—परास्तम्; पूर्वतनपर्यायेष्विव पूर्वोत्तरपक्षाणामपि ब्रह्मभिन्नानामेव स्वीकर्तव्यत्वेनानन्दस्य ब्रह्मरूपत्वायोगात्। तथाचैकस्यैव ब्रह्मणोऽवयवत्वं प्रायपाठविरुद्धमित्येवास्मदाशयः। तदत्रानुमानप्रयोगः—ब्रह्मपुच्छमिति वाक्यगतं ब्रह्म, आनन्दमयातिरिक्तम्, तत्पुच्छतयाऽऽम्नायमानत्वात्, मनोमयपुच्छाथर्वाङ्गिरसादिवदिति। एतेन—प्रमाणदृष्टेऽर्थे विरोधशङ्काया अनवकाशात्, अवयवी, नावयवः, अवयवत्वादित्यनुमानं तु परिमितशक्तिमत्स्वरूपोपाधिग्रस्तत्वाच्च नातीन्द्रियार्थ-

SGDF Sri Gangeshwari Digital Foundation

साधनायेष्ट इति प्रकाशप्रसरोक्तम्—अपास्तम् । अवयवभिन्नत्वेन भवदभिमते मनोमयादौ परमात्मनि परिमितशक्तिमत्त्वस्याभावेन साध्याव्यापकत्वात् ॥

एतेन—प्रकृते तु ईश्वरे विरोधोपयोगिपरिमितशक्तेरभावादिति प्रकाशप्रसरोक्तमप्यस्माकमेवानुकूलमिति—सूचितम् । नहि भवतां मनोमयादानन्दमयस्य कोऽपि विशेषः संभवति । यथाचान्नमयादीनां न ब्रह्मपरत्वं तथोत्तरत्रोपपादयिष्यते । एतेनान्नमयादिवदानन्दमयस्यापि कार्यत्वमेवोरीकर्तव्यम्, प्रायपाठादिति सूचितम् । एतेन—अन्नमयादिषु सर्वेषु मयटः प्राचुर्यार्थताया एवानुव्याख्यानसुधयोः समर्थितत्वादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्, निरसिष्यमाणत्वात् । तदिदं सिद्धं यत् पुच्छवाक्यगतं ब्रह्म नानन्दमयावयवः, एवमपि तस्यापि प्रतिष्ठान्तरं नास्तीति तदेवोपक्रान्तं ज्ञेयं ब्रह्मस्वरूपम्, पूर्वतनपर्यायेषु पुच्छं प्रतिष्ठेति पदद्वये प्रतिष्ठापदं पुच्छपदार्थसूचनार्थम्; अत्र तु निरतिशयप्रतिष्ठासूचनार्थमिति । एवं व्याख्याने निमित्तं तु "असन्नेव स भवती"-ति निन्दादिश्रवणमेवेति ॥

एतेन—आनन्दमयस्यान्नमयादिविकारप्रायपाठात् विकाररूपतया तन्निरूपितावयवत्वस्य सर्वप्रतिष्ठाभूते ब्रह्मण्यसंभवेन पुच्छपदेन प्रतिष्ठापदलभ्यस्यानन्दमयजगत्स्थितिरूपस्यार्थस्य दाढर्यार्थमनुवादोऽस्तिति खण्डनोक्तमपि-व्याख्यातम् । प्रतिष्ठापदबोधितमधिष्ठानत्वमभिन्ननिमित्तोपादानत्वमिति पुच्छपदेन साधनत्वबोधनद्वारा तद्दाढर्यमत्र बोधितमुपपन्नमेव । तदुक्तं परिमले—पुच्छ-

SGDF
Sri Gargeshwari Digital Foundation

पदसमभिव्याहृतेन तेन पुच्छवत् प्रतिष्ठितिक्रियासाधनत्वमुच्यत इति। अत्र परिमले पुच्छशब्दस्याधारलक्षकत्वं प्रतिष्ठापदसमभिव्याहारेण प्रतिष्ठापदस्य च पुच्छपदसमभिव्याहारेण प्रतिष्ठितिकरणमिति विवक्षितमिति "प्रतिष्ठेत्युपपदसामर्थ्यात् पुच्छपदस्याधारलक्षकत्वात्" इति कल्पतरुवचनमपि न विरुद्धम् ॥

एतेन—उक्तकल्पतरुपरिमलाशयाविज्ञानेन प्रकाशप्रसरकारैरुक्तवाक्यद्वयसंग्रहणेन दार्ढ्यार्थत्ववर्णनमयुक्तमिति यदुक्तं तदप्यनवसरमिति—सूचितम्। यथाच "असन्नेव स भवती"ति श्लोकस्य पुच्छब्रह्मविषयत्वं तथा पूर्वमेव विवेचितम्। एतेन—निगमनश्लोकादीनामानन्दमयविषयकत्वेन पुच्छविषयकत्वाभावात् हेतोः स्वरूपासिद्धिरिति प्रकाशप्रसरोक्तम्—अपास्तम्। प्रपंचयिष्यते चायमर्थ उपरिष्टात्। तथाचोक्तश्लोके ब्रह्मशब्दाभ्यासेनोपलभ्यमानेन पुच्छब्रह्मण एव प्राधान्यमवगम्यते। विज्ञानमयपर्याये ब्रह्मशब्दाभ्यासो वर्तते चेदपि "अन्योऽन्तर आत्मे" त्यन्योत्वोपदेशो वर्तते। तथाच अन्यत्वनिर्देशासमवहिताभ्यास एवात्राभ्यासपदेन विवक्षित इति न दोषः ॥

वस्तुतस्तु—अत्र "ब्रह्म पुच्छमि"ति वाक्यम्, ज्ञेयब्रह्मपरम्, स्वघटकब्रह्मशब्दाभ्यासवत्स्वपरश्लोकविशिष्टत्वात्,यन्नैवं तन्नैवमित्येवात्रानुमानप्रयोगो विवक्षितः। "विज्ञानं यज्ञं तनुते" इत्यादौ ब्रह्मशब्दे सत्यपि तस्य यच्छ्लोकत्वं पूर्वोत्तरवाद्युभयसंमतं तद्घटकत्वं ब्रह्मशब्दस्य नास्तीति न व्यभिचारः ॥

एतेन—ब्रह्मपदस्य विज्ञानमयादौ व्यभिचार इति प्रकाशप्रस-

SGDF
Sri Gargeshwari Digital Foundation

रोक्तम्—अपास्तम्। प्रपंचयिष्यते चैतदुपरिष्टात्। तदिदं सिद्धं यत् समन्वयोपपादनार्थं प्रवृत्तोऽध्यायशेषः, आनन्दमयाधिकरणं तु विगलितोपाधिजीवस्वरूपबोधनद्वाराऽखण्डस्वरूपचैतन्यबोधनार्थमित्यद्वैतमतमत्यन्तमुपपन्नमिति ॥

यत्तु अस्मन्मते—समन्वयसूत्रप्रतिज्ञातसमन्वयासाधारणहेतौ वाच्यत्व ईक्षतिनयेनोक्तेऽध्यायशेषेण प्रपंच्यप्रपंचकभावः संगतिः समन्वयसूत्रस्येत्यादि प्रकाशप्रसर उक्तम्, तत्रेदं वक्तव्यम्—समन्वयसूत्रे "सर्वे वेदा यत्पदमामनन्ती"ति वचनसिद्धसकलशास्त्रसमधिगम्यत्वं यत्प्रतिज्ञातं तत् कथं वचनवृत्त्यैवेत्यधिगतम्? शास्त्रसमधिगम्यत्वं हि उपक्रमाद्यवगततात्पर्यानुसारीत्येव हि भवन्तोऽपि समन्वयसूत्रे निरूपयन्ति। तथाच तात्पर्यानुपपत्त्या लक्षणयाऽपि सर्वशास्त्रसमधिगम्यत्वं साधयितुं शक्यमेवेति वाच्यत्वसंभावनासमर्थनं तद्व्यवस्थापनं चोभयमपि भवतां व्यर्थमेव। यथा ह्यद्वैतमते ब्रह्मणि सर्वेषामपि पदानां लक्षकत्वम्, एवं भवतामपि सर्वेषामपि लक्षकत्वं संभावयितुं शक्यम्। भवन्तोऽपि हि अन्यत्रैव प्रसिद्धानामुभयत्र प्रसिद्धानामन्यत्रप्रसिद्धानां चैत्र हि समन्वयमध्यायशेषेण मन्यन्त इति रुद्रानन्दमयादिशब्दानां लक्षणयाऽपि विष्णुबोधकत्वं तात्पर्यानुसारेण साधयितुं शक्यत इति व्यर्थ एवाध्यायशेषः समापतति ॥

एतेन—ईक्षत्यधिकरणवैयर्थ्यमपि—व्याख्यातम्। वाच्यत्वसंभावना हि शास्त्रयोनित्वाधिकरणादिभिरेव सिद्धा। नह्यन्यथा ब्रह्मादिशब्दमहिम्ना जिज्ञासाधिकरणसिद्धान्तोऽपि भवतामुपपन्नः

SGDF
Sri Gangeshwar Digital Foundation

स्यात्। नह्यवाच्यं न शास्त्रगम्यमिति वाक्यागम्यमिति वा संभवति, अर्थवादानां प्राशस्त्यलक्षणकत्वसिद्धान्तस्य गंगायां घोष इत्यादौ गंगापदस्य तीरलक्षकत्वसिद्धान्तस्य चान्यथा व्याकोपो हि समापद्येत। तत्राप्राशस्त्यं वचनवृत्त्यैव शास्त्रगम्यमिति ह्यङ्गीकरणीयं स्यात्। नचैतदस्ति ; अन्यथा लक्षणाया एव लोपापत्तेः। न हि भवतां सर्वत्रैव रुद्रादिपदेन विष्णोरेव ग्रहणम् ; रुद्रो विष्णोर्दासिः इत्यादिवाक्यानामपि विष्णुर्विष्णुदास इत्यापत्तेः। तथाच समन्वयपदस्य वचनवृत्त्या शास्त्रसमधिगम्यत्वमिति विवरणं वाच्यत्वसंभावनासमर्थनं तत्र तत्र वाच्यत्वसमन्वयकरणं सर्वं व्यर्थमेव भवताम्॥

किंच भवन्मते हि प्रतिबिंबभूतं ब्रह्मोपास्यं बिंबभूतं च तत् ज्ञेयम्, तदुभयं विभिन्नमिति द्विविधं ब्रह्माङ्गीक्रियते।

तदुक्तं चन्द्रिकाप्रकाशे-"उपासनाकालेषूपासकचित्ते प्रतीतप्रतिबिंबरूपात् ज्ञेयं बिंबभूतं ब्रह्मान्यदि"ति। "तथान्यप्रतिषेधादि"त्यधिकरणभाष्येऽपि भवदीयेऽयं विषयो व्यक्त एव वर्तते। तथाचानन्दमयादिवाक्यमुपासनापरं विवक्षितमुत ज्ञानपरम्। आद्ये भवन्मते प्रतिबिंबस्य फलप्रदत्वं नांगीक्रियते ; "ब्रह्मैव प्रतिबिंबे यदतस्तेषां फलप्रदम्" इति भवदीयवचनात्। तथाचानन्दमयशब्दस्य फलप्रदत्वादिना लक्षितज्ञेयब्रह्मपरत्वं नात्र व्यवस्थापितं भवतीति प्रतिज्ञाविरोधः। द्वितीये तु-"सर्वापेक्षितानन्दप्रदोपासनाविषयपूर्णानन्दत्वरूपमहागुणस्य प्रथमं वक्तव्यत्वाच्चानन्तरसंगतिरि"ति चन्द्रिकाविरोधः॥

SGDF
Sri Gangeshwari Digital Foundation

यदत्रोपासनाविषयस्यानन्दप्रदत्वमित्युक्तं तदिदं बिंबस्यैव फलप्रदत्वमिति भवदीयसिद्धान्तविरुद्धमित्यन्यदेतत्। सर्वथा चोपासनाविधिगतानामानन्दमयादिपदानां प्रतिबिंबवाचकत्वस्य समर्थनेऽपि बिंबवाच्यत्वस्य प्रतिज्ञातस्यासमर्थनान्नाध्यायशेषस्य प्रपंच्यप्रपंचकभावो भवदभिमत उपपद्यते। यत्तु चन्द्रिकाप्रकाशे—"उपासनाकालप्रतीतप्रतिबिंबस्य वासनामयत्वात् तादृशप्रतिबिंबजनकवासनाहेत्वनुभवोत्पादनान्नाखिलवेदवाक्यैर्ज्ञेयब्रह्मगुणवर्णनादि"त्युक्तम्; तत्रेदमेव वक्तव्यम्—यत् बिंबप्रतिबिंबयोर्भेदस्य पूर्वं प्रकाशकारैरेवोक्तत्वात् अन्यानुभवजन्यवासनानामान्यस्योत्पत्तेरसंभवदुक्तिकत्वेनोपास्यस्य वासनामयप्रतिबिंबस्यास्मन्मत इव भवतामपि मते आरोपितत्वेनोपासनाविधौ ज्ञानविधेरप्यावश्यकत्वेन वाक्यभेदापत्त्या च नोपपन्नं पश्यामः॥

अत्रेदमवधेयम्—अतत्त्ववादिनो हि उपास्यस्य प्रतिबिंबस्य वासनामयत्वं फलाप्रदत्वमानन्दादिगुणानामुपासनार्थत्वं च "आध्यानाय प्रयोजनाभावात्" इत्यादिषु निरूपयन्तोऽद्वैत्यभिमतं सविशेषमुपास्यमेव स्वेषामप्युपास्यतया मन्यन्ते। अद्वैतिनोऽपि आविद्यकमपि सविशेषं अविद्याप्रतिबिंबं वा मन्यन्त इति सर्वविदितमिदम्॥

एतेन--ज्ञेय ब्रह्मस्वरूपमपि—व्याख्यातम्; आनन्दादिगुणानामुपासनार्थत्वेन ज्ञेयत्वाभावेऽपि केषांचन गुणानां वस्तुसत्त्वस्य विष्णावङ्गीकारात्। सर्वथातु द्विविधं ब्रह्म तेषामपि सम्मतमिति तु न विवादास्पदम्। एतेन—ब्रह्मणो द्वैरूप्यस्याप्रामाणिकत्वात्, स-

SGDF
Sri Gurgeshwari Digital Foundation

र्वाण्यपि हि वेदान्तवाक्यानि असंख्येयकल्याणगुणाकरसकलदोषविधुरमेकरूपमेव ब्रह्म नारायणाख्यं प्रतिपादयन्ति इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्, भवतामुपास्यस्य ज्ञेयस्योभयस्य चैकरूपत्व एकस्य वासनामयत्वमपरस्य तद्विपरीतत्वमित्यादिकल्पना यथोपपद्यत एवमस्माकमपि द्वैरूप्यमुपपद्यत एव। इयान् विशेषः—यत् भवतामुपास्यार्थकवाक्यार्थानुभवजनितवासनामयमुपास्यम्, अस्माकमनाद्यविद्याधीनवासनामयमुपास्यमिति। सर्वथा तु ब्रह्मद्वैरूप्याप्रामाणिकता नातत्त्ववादिभिरापादयितुं शक्यते॥

वस्तुतस्तु—"द्विरूपं हि ब्रह्मावगम्यते" इत्यस्मदीयभाष्येण कल्पितोपाधिसंबंधत्वेनाकल्पितोपाधिसम्बन्धत्वेन चैव द्वैरूप्यं वर्णितं नतु तथा स्वरूपभेदेन पारमार्थिकेन, यथा भवन्तःस्वरूपभेदमप्यङ्गीकुर्वन्ति। तथाचास्मन्मत उपास्यस्यापि फलप्रदत्वमुपपन्नमेवेत्युपासनाऽपि सफला। भवतां तूपासना विफलैव; तत्कालेऽपि हि ब्रह्मज्ञानं यत् भवद्भिरङ्गीकृतं तेनैव फलसिद्धेः। तदुक्तं चन्द्रिकाप्रकाशे—उपासनावत् ज्ञानस्यावश्यकत्वादि"ति। तथाच द्विरूपस्यापि ब्रह्मणो वस्तगत्या महातात्पर्यैकत्वस्यैवास्मन्मतेऽङ्गीकारात् न वेदान्तानामनेकपर्यवसानमस्माभिरप्यङ्गीक्रियते। एतेन—"ततो व्याकुलबुद्धयो गुरुसंप्रदायविकला अश्रुतवेदव्याख्यातारः सर्वत्राप्येकरूपतामननुसन्दधानाः वेदं हिंसन्ति" इत्यादि प्रकाशप्रसरोक्तमनुक्तोपालंभनमेवेति—सूचितम्॥

तदयं निष्कर्षोऽद्वैत्यभिमतः—यत्र जीवेश्वरयोर्भेद आम्नायते,

SGDF
Sri Gangeshwari Digital Foundation

तत्र कल्पितोपाधिसम्बन्धजीवेश्वरग्रहणम्, यत्राभेद आम्नायते, तत्राकल्पितोपाधिसम्बंधस्वरूपचैतन्यग्रहणमिति । एतेन—प्रपंचसत्यत्वमिथ्यात्वश्रुतिरपि—व्याख्याता, तस्यापि बद्धमुक्तपुरुषभेदेनोपपत्तेः । एतेन—सगुणनिर्गुणवाक्यानुरोधेन ब्रह्मद्वैविध्यकल्पने कुत्रचिज्जीवेश्वरभेदबोधनात् कुत्रचिदभेदबोधनात् केचन भिन्नाः केचनाभिन्ना इति जीवद्वैविध्यकल्पनापत्तेरित्यादि प्रकाशप्रसरापादनमिष्टापत्तिपराहतमेवेति—सूचितम् । यथाच सर्वधर्मविधुरस्यापि ब्रह्मणः शास्त्रगम्यत्वं तथा बहुषु स्थलेषु विस्तृतमिति—"सर्वधर्मविधुरे प्रमाणप्रवृत्त्ययोगात् निर्गुणवाक्यस्य स्वक्रियाविरोधेन हेयगुणनिषेधपरताया व्यवस्थितत्वाच्चेति प्रकाशप्रसरोक्तमपि—परास्तम् । उक्तद्विरूपब्रह्मसमर्थनं चोत्तरत्र बहूनां सगुणवाक्यानां निर्गुणवाक्यानां च विचारस्य भाष्यकारैरुपपादनात् स्पष्टमेव विदुषाम् ॥

एतेन—नैतद्द्वैरूप्यप्रपंचनमुत्तरत्रोपलभ्यते । अध्यायचतुष्टयस्यापि परब्रह्मणि गुणनिर्णायकत्वादित्यादि प्रकाशप्रसरोक्तमाशामोदकमात्रम्, नतु वस्तुस्थितिकथनरूपमस्मदीयभाष्यावलोकादिमूलं चेति—सूचितम् ॥

—:—

## [२] ब्रह्मवल्ल्युक्तार्थसंग्रहः ॥

एतावता प्रपंचेनानन्दमयाधिकरणमद्वैतमतानुसार्येव नानन्दतीर्थमतानुसारीति विवेचितम् । इतः परं ब्रह्मवल्ल्युक्तार्थसंग्र-

SGDF
Sri Gargeshwari Digital Founa

होऽपि क्रियमाणोऽद्वैतमतमेव पोषयति, न द्वैतमतमिति निरूपयितुं प्रवर्तामहे ॥

तत्रैवमद्वैतिनो मन्यन्ते—तत्र यत् ब्रह्म मंत्रवर्णेन प्रकृतं "सत्यं ज्ञानमनन्तमि"ति, तदिदं "ब्रह्म पुच्छं प्रतिष्ठे" त्युच्यते। तद्विजिज्ञापयिषयैवान्नमयादयः पंच कोशाः कल्प्यन्ते—इति ॥

इमत्र सर्वाविवादास्पदं यत् "ब्रह्मविदाप्नोति परमि"त्यत्रोपक्षिप्तस्य ब्रह्मण एव लक्षणमुखेन स्वरूपं "सत्यं ज्ञानमनन्तं ब्रह्मे"-तिवाक्येन प्रदर्श्यत इति। तदुक्तं भाष्ये—"तत्र यत् ब्रह्म प्रकृतं "सत्यंज्ञानमि"ति मन्त्रे इति। प्रकाशप्रसरेऽप्युक्तम्—"तत्र "सत्यं ज्ञानमनन्तं ब्रह्मे"ति लक्षणशंकाया उत्तरमिति। तत्र सत्यपदस्य त्रिकालाबाध्यत्वमेवार्थः, तत्रैव प्रसिद्धेः ॥

एतेन--"यो वेद निहितं गुहायामि"त्यपि---व्याख्यातम्; तस्यापि ब्रह्मवेदनप्रकारनिरूपणपरत्वस्य सर्वसंमतत्वात्। तदुक्तं प्रकाशप्रसरे—"यो वेदे"ति द्वितीयशंकोत्तरमिति। इयान् विशेषः-यदद्वैतमते "यो वेद निहितं गुहायामि"त्यनेन विगलितोपाधिसम्बंधतया गुहाशब्दवाच्यवक्ष्यमाणकोशपंचकाधिष्ठानतया ज्ञानं बोध्यत इति विवक्षितम्, प्रकाशप्रसरकारादिमते—परिपूर्णपरिमाणमपि स्वशक्तिवशात् भक्तानुकंपयाऽल्पपरिमाणं कार्यकरणप्रेरकत्वेन हृदयगुहास्थिततया ज्ञानमिति। किमत्र युक्तम्? वयं पश्यामः-यदद्वैतिनां विवरणमेव समुचितमिति। नहि "सत्यं ज्ञानमि"ति परिपूर्णरूपत्वेन प्रकृतस्य ब्रह्मणो वेदनान्वयसमयेऽल्पपरिमाणत्वेन ग्रहणं समुचितं भवति। नहि पञ्चविधं ब्रह्म मन्त्रवर्णे प्रकृतम्। अ-

SGDF
Sri Gangeshwari Digital Foundation

स्मन्मते तु गुहानिहितकोशपंचकाधिष्ठानैकस्वरूपचैतन्यस्य विवक्षितत्वात् मांत्रवर्णिकत्वादिकं सर्वथा सर्वत्रापेक्षिकं पर्यवसितं वोपपन्नमेव। किंच "ब्रह्मविदाप्नोति परमि"त्यत्र हि शंकात्रयं कीदृशं भवतीत्यपि पर्यालोचने इदमेव युक्तम्, यत् को वा ब्रह्मवित्? काचाऽऽप्तिः? किंच प्राप्यपरस्वरूपमिति शंकात्रयं समुदेतीति। यतः तत्र पदत्रयं पृथक्तयाऽऽम्नायते, ननु किं ब्रह्म? किं तद्वेदनम्? का वाप्तिरिति? नहि परमिति प्राप्यतया निर्दिष्टं किमित्येतावताऽपि विज्ञातम्॥

एतेन—"ब्रह्मविदाप्नोति परमि"त्युक्ते शंकात्रयमुदेति—किंलक्षणं तद् ब्रह्म? कथं च तद्वेदनम्? काच प्राप्तिरित्यादि प्रकाशप्रसरोक्तं—अपास्तम्। तत्र प्रथमप्रश्ने समासोपसर्जनब्रह्मपदार्थस्यापि स्वरूपं किमिति प्रश्नो भवति चेदपि सोऽयमवान्तरप्रश्न इत्येवोरीकर्तव्यम्। सर्वथातु "सत्यं ज्ञानमि"ति ब्रह्मस्वरूपमुपपाद्य "यो वेद निहितं गुहायां परमे व्योमन्" इत्यनेन ब्रह्मविद्रूपमेव निर्दिश्यत इत्यङ्गीकरणीयम्। तत्रच "यो वेदे"ति वाक्ये गुहानिहितपदेन ज्ञेयब्रह्मस्वरूपं "सत्यं ज्ञानमि" ति लक्षितं प्रतिपादितमिति तदेव स्यात्, यदि कोशपंचकाधिष्ठानमेव ब्रह्मपदार्थ इत्युपनिषदर्थः। अन्यथा ब्रह्म गुहानिहितं गुहानिहितत्वेन परिच्छिन्नत्वेन ज्ञेयमिति विवरणेऽपृष्टोत्तरतादोषः समापतति। नहि "ब्रह्मविदाप्नोति परमि"ति वाक्ये ब्रह्मणो यत्किंचिद्विशेषणविशिष्टस्य ज्ञेयत्वं प्रतिपादितम्। नह्यपरिच्छिन्नस्य प्राप्यत्वमिव ज्ञेयत्वमप्यसंभवदुक्तिकम्, येन वेदनपदार्थविवेचनावसरेऽल्पपरिमाणत्वादिग्रह-

SGDF
Sri Gargeshwari Digital Foundation

णादिकमत्रावसंरप्राप्तमिति "यो वेदे" ति वाक्यस्त्रारस्यमद्वैतमृत एव वर्तते। एतेन—सोऽश्नुते सर्वान्कामान् सह। ब्रह्मणा विपश्चिते"ति वाक्यमपि—व्याख्यातम्। अस्मन्मतेनु यतो जीवब्रह्मणोरभेदस्ततः शरीराद्यात्मविज्ञानिनो न ब्रह्मज्ञानिन इति बोधयितुं को ब्रह्मविदिति प्रश्नोत्तरे गुहानिहितत्वोक्तिर्नासंगतेति सर्वविदितमिदम्।

अत्रहि "सोश्नुते सर्वान् कामान् सहे"ति प्राप्तिपदार्थनिरूपणपरं ब्रह्मणा विपश्चितेति"परं" पदार्थविवेचनपरमित्यङ्गीकार एव स्वरसः। तत्रच "परं" इति द्वितीयान्तार्थस्य "ब्रह्मणा विपश्चिते"ति तृतीयान्तमपि ब्रह्मणापदं विवरणमिति युक्तमेव,नतु तत् सहयोगतृतीयान्तमिति। अतएव—"सोऽश्नुते सर्वान् कामान् सहे"तिवाक्यान्तरशेषतयैव युगपदर्थकसहशब्दग्रहणमप्युपपद्यते॥

एतेन—"सोश्नुत" इति तृतीयशंकोत्तरम्। न संयोगमात्रं प्राप्तिः, नाप्यैक्यापत्तिः, किन्तु तद्व्यक्तिस्थाने स्थलविशेषे तस्मादत्यन्तभिन्नतया सत्यकामत्वादितत्सारूप्याभिव्यक्तिः। नित्याभिव्यक्ततया स्थितेन ब्रह्मणा सह तदधीनतया स्वयोग्यसुखभोग एव तत्प्राप्तिरिति प्रकाशप्रसरोक्तम्—अपास्तम्। सहयोगतृतीयान्तस्थले हि सहयोगिनः "त्वष्ट्रा सोमं पिब स्वाहे"त्यादाविव प्रकृतक्रियानन्वय एव विवक्ष्यत इति ब्रह्माधीनतया सकलभोगप्राप्तिरत्र वाक्यार्थ इति कथमपि न संभवति। अत्रहि भवदीये विवरणे स्थलविशेषो यः संकीर्तितः, स परशब्दविवरणं वोत स्वतंत्रनिर्देशो वा। नहि तत्परपदार्थविवरणम्॥

एतेन—ब्रह्मणापदमपि व्याख्यातम्; तस्यापि द्वितीयान्तकेव-



SGDF Sri Gargeshwari Digital Foundation

लपरशब्दार्थत्वाभावात्। द्वितीयस्त्वप्रामाणिको नांस्माभिरुररीकर्तुं पार्यते। ब्रह्मणा विपश्चितेति विपश्चितेति विपश्चित्विशेषणनिर्देशोऽपि ब्रह्मविदभेद एव परप्राप्तिपदेन विवक्षित इति स्पष्टं गमयति। तथाच विपश्चित् पदवैयर्थ्यमपि मतान्तरे—व्याख्यातम्॥

यत्तु "तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यादिसृष्टिवाक्यं तदिदं "सत्यं ज्ञानमि"ति निर्दिष्टस्य ब्रह्मण एव तटस्थलक्षणद्वारा बोधनार्थमित्यद्वैतसंप्रदायानुसारिणः। प्रकाशप्रसरकारास्तु—तत्र "सत्यमि"त्यत्र सच्छब्देन जगत्स्रष्टृत्वं यदुक्तं तदिदमसंभवि; पञ्चभूतानामेव जगत्कारणत्वादित्याशंक्य महाभूतानामपि ब्रह्मैव कारणं तदन्तर्गतं तत्सत्तादिप्रदं चेतिभावेन सत्य पदोक्तं जगत्कारणत्वं विवृणोति—"तस्माद्वा एतस्मादि"ति इति—व्याचक्षते॥

अत्रेदं वक्तव्यम्—यदि ह्यत्र पंचभूतानामेव कारणत्वमिति शंकानिवारणार्थमेव "तस्माद्वे"त्यादिसृष्टिप्रकरणसन्दर्भः प्रवृत्तः, तर्हि कथं हि "आत्मन आकाशस्संभूत"इत्यात्मपदेन ब्रह्मपरामर्शः क्रियते? किमिति वा "आकाशाद्वायुरि"त्यादावपि "तस्माद्वा एतस्माद्वायुरि"ति वाय्वादीनामपि साक्षादेव ब्रह्मकारणकत्वं नोपक्षिप्तमिति। तदत्रात्मपदप्रयोगेणाकाशादिस्रष्टृत्वबोधनेन चावगम्यते—यत् पाञ्चभौतिकशरीरप्राणमनोविज्ञानादिकोशाधिष्ठानत्वेन गुहास्वरूपविवेचनपूर्वकं तन्निहितात्माभेदनिरूपणार्थमेवायं संदर्भः सर्वोऽपि प्रवृत्त इति। नहि सत्यं ज्ञानमिति प्रोक्तं लक्षणमसंभवीति श्रुतिबोधितेऽर्थे कस्यापि प्रत्यक्षाद्यवलम्बिनः पूर्व-

SGDF Sri Gangeshwar Digital Forum

पक्षस्यावसरः संभवति। अन्यथा "तस्माद्वा एतस्मादि"ति वाक्यश्रवणानन्तरमपि कथं वा सा शंका न समुदेतीति व्यर्थमत्र स्रष्टृत्वनिरूपणं प्रधानतयेत्यनिर्णीतार्थगुहापदार्थस्य तन्निहितपदार्थस्य च विवरणार्थमेवोत्तरः प्रपंच इत्यकामेनाप्युपगमनीयम् ॥

वस्तुतस्तु—"तस्माद्वा एतस्मादात्मन आकाशः संभूत" इति पञ्चमीश्रवणादात्मन उपादानत्वमवगम्यत इत्युक्तवाक्येनात्मनः केवलनिमित्ततया भवदभिमतं जगत्स्रष्टृत्वं मंत्रेण बोधयितुं न शक्यते, अस्मन्मतेतु तस्यैवात्मनोऽविद्यावृतस्याभिन्ननिमित्तोपादनत्वस्योरीकरणात्तन्निर्देश उपपद्यत एव। अत्र हि "तस्माद्वा एतस्मादि"ति विशेषणद्वयेन सत्त्वादिना ज्ञातं किंचिद्रूपेणानन्दत्वादिनाऽज्ञातं चात्मस्वरूपं विवक्षितमिति न किमप्यनुपपन्नम्। आनन्दमयाधिष्ठानत्वेनोपसंहारोऽप्यत एवोपपद्यते। यतोऽपरिच्छिन्नानन्दस्वरूपेण ज्ञानमेव मोक्षसाधनमित्यस्मदीयं मतम्। नहि वयं ब्रह्मवल्ल्यां सर्वत्र चिन्मात्रचैतन्यस्वरूपं बोध्यत इति वदामः, किन्तु "ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्य एव ॥

एतेन—"आत्मन आकाशः संभूत" इत्यादेश्च विक्षेपशक्तिमदज्ञानोपहितादात्मन आकाशः संभूत इत्याद्यर्थकत्व आनन्दमयाधिकरणस्य परानभिमतोपहितपरत्वापातः; शुद्धचिद्विवर्तस्याकाशादेः संभूत इत्युपदेशायोगः, कल्पितात् कल्पितान्तरस्योत्पत्त्यनुपपत्तिरित्यादीनि दूषणान्यप्यन्यत्र न्यायामृतादौ सोपपत्तिकमुक्तानीति प्रकाशप्रसरोक्तम्—अपास्तम्। नह्यत्र वयं "तस्माद्वा एतस्मादि"त्यप्यानन्दमयाधिकरणमुख्यविषयवाक्यं मन्यमहे, न-

SGDF
Sri Gangeshwari Digital Foundation

वाप्यऽऽकाशादेः शुद्धचिद्विवर्तत्वम्। नवा कल्पितादुपहितात् स्वन्यूनसत्ताकस्य कल्पितान्तरस्याङ्गीकारमित्याद्यन्यत्र विस्तृतमेव वरीवर्ति। सर्वथा—आत्मन आकाशः संभूत इत्यादिकं स्रष्टृत्वविवेचनद्वारा न सत्यपदार्थविवरणपरम् ॥

एतेन—"स वा एष पुरुषोऽन्नरसमय" इत्यादिमयडन्तवाक्यान्यपि—व्याख्यातानि। यदत्र प्रकाशप्रसरकाराः—सत्यपदोक्तं जगज्जन्महेतुत्वमात्मन आकाश इत्यादिना समर्थ्य "अस्ति चैत्र" इत्युक्ते जीवतीति प्रतीतेरस्तेः शत्रन्तस्य जीवनप्रदत्वं सद्लृविशरणइति धातोः क्विबन्तरूपेण निष्पन्नस्य तस्यैव विशरणकर्तृत्वपरत्वं चेष्टकत्वं चार्थत्रयं अन्नमयप्राणमयमनोमयवाक्यैरुपपाद्य ज्ञानत्वानन्तपदार्थविवरणरूपत्वं विज्ञानमयानन्दमयाभ्यां क्रियत इत्यादि—वर्णयन्ति। तत्रेदमेव प्रष्टव्यम्—यत सत्यपदेनात्रार्थचतुष्टयमपि विवक्षितमिति वा ज्ञानानन्तपदार्थयोरपि तेनैव ग्रहणं कयाचन कल्पितया व्युत्पत्या न कृतमिति वा कथं भवन्तोऽवगच्छन्तीति। अस्तुवा कथमपि सत्यपदेन कस्याप्यर्थस्य ग्रहणम्, एवमपि "अन्नात् पुरुषः" इति जन्यत्वेनोक्तं शरीरं "स वा एष इति तदेतच्छब्दाभ्यामन्नरसमयशब्देनानूद्य कथं वा मुख्यं प्रद्युम्नापरपर्यायपरमात्मत्वमत्र बोधयितुं शक्यम्? नहि परमात्मा प्रद्युम्नः "स वा एष पुरुष" इति परामृष्टान्नरसमयोऽस्मदादिशरीरम्।

यत्तु प्रकाशप्रसरे—आकाशः संभूत इत्यादावाकाशशब्देन भूततदभिमानितच्छरीरतदन्तर्यामिनां सर्वेषां ग्रहणमिति वर्णितम्, तदिदं न विचारसहम्। नहि व्यूहरूपेण प्रथमं ब्रह्मणोऽत्र प्रस्ता-

SGDF
Sri Gangeshwari Digital Foundation

वो वर्तते। अन्यथा कथं वा "सत्यं ज्ञानमि"त्यत्र स्पष्टमेव जीवनप्रदत्वादीनां पंचानां जगत्स्रष्टृत्वेन सह षण्णां वा न ग्रहणमिति भवन्त एव विवेचयन्तु। तथाच नात्रानन्दमयब्रह्मतावादो युज्यते। नह्यन्नात् पुरुष इत्युत्पत्तिनिर्देशः परमात्मनि संभवति॥

नापि वाऽप्रत्यक्षे परमात्मशरीरे इदमिति प्रत्यक्षनिर्देश आञ्जसो भवतीति प्रसिद्धशरीरमेवान्नमयपदार्थो युज्यते। आकाशादिपदानां भूततदभिमानितद्विग्रहतदन्तर्यामिपराणामपि यथायोगं उत्पत्तिप्रादुर्भावादिना संभूतशब्दसामानाधिकरण्यमन्नात्पुरुष इति निर्देशः "स वा एष पुरुषोऽन्नरसमय" इति निर्देशश्चोपपद्यते इति शङ्का तु प्रवृत्तिनिमित्तभेदेन तदैक्येन वा सकृदुच्चरितन्यायविरोधेनैकस्य शब्दस्य युगपन्नानार्थबोधकत्वासंभवान्नात्रावसरति। "तस्माद्वा एतस्मादि"ति अन्नमयादन्यस्यैव परमात्मत्वोपदेशस्तु द्वैतिनामत्यन्तमेव विरोधी। अन्नमयादिपदानामपि परमात्मपरत्वनिर्णये हि "अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्" इति वचनप्रवृत्तिः, नचात्र तन्निर्णय इत्यन्नमयब्रह्मता न युज्यत एव। "अन्वयं पुरुषविध" इति पुरुषसादृश्यनिरूपणमपि वस्तुसत्पुरुषत्वाभावं लिङ्गयतीत्यानन्दवल्ल्या पुच्छब्रह्मब्रह्मतायामेव तात्पर्यम्। अतएव—ब्रह्मवल्लीसमाख्यानम्, नत्वेवमन्नमयादिवल्लीति। "अन्नमयाद्योऽभ्यासा" दित्यसूत्रयन्तः "आनन्दमयोऽभ्यासा" दित्येव सूत्रयन्तश्च बादरायणाचार्या अप्यत्र हस्तावलम्बयन्ति। ब्रह्मण एवावयवत्वासंभवान्नानन्दमयब्रह्मतेत्यधिकाशङ्का यथा आनन्दमयपर्याये, एवं "तस्येदमेव शिर" इति निर्देशानुपपत्तिशङ्काऽधि-

SCDF

काऽन्नमयपर्याय इत्यधिकाशङ्कानिराकरणार्थम "त्रमयोऽभ्यासा- दि"त्यसूत्रणमिति न तत्र परिहारः संभवति ॥

एतेन—मान्त्रवर्णिकसूत्रे "सत्यं ज्ञानमनन्तं ब्रह्मे"ति मंत्रवर्णे लक्षणवत्तयोक्तं परमेव ब्रह्मान्नमयादिशब्दपंचके गीयते ; सत्य- ज्ञानानन्तपदानामन्नमयादिशब्दानाँ चार्थानुसंधाने सत्येकार्थत्व- प्रतीतेः । मन्त्रवर्णे परमेव ब्रह्मोच्यत इत्यन्नमयादिशब्दै रपि तदेव कथ्यते । तदुक्तँ परमेव ब्रह्मशब्दानुसंधानादन्नमयादिभिर्गीयत इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम् । अयं भावः—"स वा एष पुरुषः" इति अन्नरसमयमेतत् शरीरमुद्दिश्य स इत्यनेनात्मत्वं विधीयत इत्यङ्गीकरणीयम् । एवंच सति शरीरमेव प्रथमत आत्म- तया निरूपितं भवति । अत्र शरीरात्मताद्युपदेशस्तु न मुख्योप- देशः, किन्तु द्वारमेवेति लोकसिद्धत्वेऽपि शरीरात्मत्वज्ञानस्य नानुपपत्तिः, प्रकाशप्रसरमते तु यद्यपि स इति तच्छब्द उपपद्यते, एवमपि एष इत्येतच्छब्दः कथमपि नोपपद्यते । नहि शरीरमिव प्रद्युम्नरूपपरमात्माऽपि कस्यापि प्रत्यक्षः । एतेन—एषः—आ- काशादिपुरुषान्तपदै र्मुख्यवाच्यतया प्रकृतः पुरुषः—जीवदेहस्थः पुरुषनामा हरिः अन्नरसमयः—अन्नरसेन संहर्तृत्वेन पूर्णः महा- भोक्तेत्यर्थः । प्राकृतान्नविकारदेहस्थोऽनिरुद्धोऽन्नरसमयः । प्राकृ- तान्नपरत्वव्यावृत्त्यर्थं रसशब्दः । व्यवहितपरामर्शी स इति तच्छ- ब्दः । अन्यथा "एष पुरुषोऽन्नमय इत्येव स्यात् इत्यादि प्रकाशप्र- सरोक्तम्—अपास्तम् । मुख्यवाच्यतया प्रकृतः पुरुषनामा हरिर्य- द्येषशब्देनोच्यते, तर्हि कथं तच्छब्देन व्यवहितपरामर्शिनाऽपि तद-

SGDF Sri Gurgashwari Digital Foundation

ग्रहणम्? नह्येकमेव व्यवहितं प्रकृतं च भवति। एतेनान्नरसमय-शब्दोपि व्याख्यातः। अत्र ह्यन्नरसशब्देनान्नात् पुरुष इति वाक्य-गतान्नपदार्थ एव ग्रहीतव्यः, नापूर्वपदार्थान्तरं भवत्कल्पितम्। अत एव ह्ये "तमन्नमयमात्मानमुपसंक्रामती"ति विना रसशब्दमुपक्रम-णशोधनवाक्येषु निर्देश उपपद्यते। तथाचाद्यमानस्यान्नस्य स्वरूप-तः सर्वात्मना न शरीरोपादानत्वम्, किन्तु तत्सारभूतांशविशेषा-त्मनैवेत्येवात्र विवक्षितम्। नह्यन्नपदस्य संहर्तृत्वरूपार्थपरत्वं भवत्कल्पितं कुत्रापि दृष्टचरम्। नहि रूढानां योगरूढानां वा प-दानामसति निमित्ते वाक्यशेषादौ योगादिना कोऽप्यभिमतः स-र्वोऽर्थः संपादयितुं शक्यत इति सविनयमिदं प्रार्थयामः—यद-लमनेन व्याकरणपाण्डित्यप्रकाशनेनाप्रयोजकेनेति। न्यायरक्षामणौ तु—अन्नरसमयशब्देन शरीरावच्छिन्नजीवग्रहणं कृतमिति तत्पक्षेऽ-न्नरसशब्देनैव शरीरग्रहणं वर्तत इति त्वन्यदेतत्॥

इदमत्रापरमालोचनीयं यदन्नमयादिपदबोध्यस्य परमात्मनोऽ-निरुद्धादेः किं संहर्तृत्वादिकमेकमेव सत्यपदोक्तं लक्षणं विवक्षित-मुत सर्वं मिश्रितमिति। आद्ये स इति तच्छब्देन कारणत्वस्यापि संग्रहेण संहर्तृत्वजीवनप्रदत्वरूपधर्मद्वयमात्रबोधनमत्र न युक्त-म्। द्वितीये जगच्चेष्टकत्वरूपलक्षणान्तरसमन्वयोऽपि कथं न कृतः? एतेन—अनिरुद्धादीनां सर्वेषां परमात्माभिन्नानां सर्वलक्षणलक्षित-त्वे अन्नरसमयादिशब्दैरनिरुद्धादेरेव ग्रहणमित्यत्र विनिगमनावि-रहोऽपि सूचितः। नहि सत्यमित्येकपदोक्तानामर्थानां मध्ये त्रया-णामेकेन प्रकरणेन समन्वयः, अपरस्यतु समन्वयोऽपरेण प्रकरणे-

SGDF Sri Gurgeshwari Digital Foundation

नेति कल्पनाऽपि स्वरसा भवति। एतेन—अन्नरसमय इत्युक्तौ सत्यपदस्य सर्वजीवनहेतुत्वसंहर्तृत्वरूपार्थद्वयं विवृतं भवति। सर्वचेष्टकत्वरूपार्थान्तरं विवरितुं देहस्थप्रद्युम्नाख्यरूपप्रतिपादनपरं प्रकरणान्तरमारभते—"तस्माद्वे"ति प्रकाशप्रसरोक्तमपि—परास्तम्। अन्नरसशब्देन हि कथंचित्प्राणस्यैवं मनसो विज्ञानस्यानन्दस्य च ग्रहणे नह्यन्नरसमय इत्येननानिरुद्धादीनां सर्वेषामपि ग्रहणं कथमिव संभवति? यदि "सत्यं ज्ञानमि"ति वाक्योक्तलक्षणसमन्वय एवात्र विवक्षित इति, प्राणमनआदिशब्दान्तरेण मयडन्तेनान्यस्य ग्रहणं श्रुतौ यद्वर्तते तदुपपत्तिर्हि न देहान्तस्थ एव हरिः केनचन केनचन नाम्ना प्राणमयादिशब्देन गृह्यत इति पक्षे संभवति। "अन्योऽन्तर आत्मे"त्यन्यत्वमिवान्तरत्वमपि यन्निर्दिश्यते, तदिदं पूर्वतनशरीरपरित्यागेन प्राणमात्रग्रहणेनात्मस्वरूपमत्र बोध्यत इति गमयति॥

एतेन—मनोमयशब्दोऽपि—व्याख्यातः। नहि सामान्याकारज्ञानमात्रं मनःशब्दार्थ इत्यहंप्रत्ययालंबनशरीरप्राणमनोबुद्धिसुखविशिष्टजीवादिविगलनेनात्मस्वरूपविवेचनमेवात्र क्रियत इत्यकामेनाप्युपगमनीयम्। अत एवान्योऽन्तर आत्मेत्यन्यत्वनिर्देश उपपद्यते॥

यत्तु—"अनन्योऽप्यन्यशब्देन तथैको बहुरूपवानि"त्यनुव्याव्याख्याने—उक्तम्, तेन सत्यं अन्यत्वनिर्देशेन परमात्मभेदो नास्तीति बोध्यते, एवमपि "अन्योऽन्तर आत्मे"ति पुनःपुनरन्यत्वनिर्देशः किमर्थं क्रियते? नहि तस्य भवन्मते कथंचिदपि साफल्यं

SGDF
Sri Gargeshwari Digital Foundation

संभवति। एतेन—प्रतिपर्याय "मन्योऽन्तर आत्मे"त्यात्मपदमपि-व्याख्यातम्। नहि मुख्यतया वाच्यत्वेनाव्यवहितप्रकृतोऽनन्तस्थोऽनात्मा वा, अस्मन्मते तु उपदेश्यतया प्रकृतात्मत्वोपदेशार्थमात्मपदं पुनः पुनः प्रयुज्यमानं स्वरसमेव वर्तते॥

एतेन—"तस्यैष एव शारीर आत्मा। यः पूर्वस्ये"ति वाक्यमपि प्राणमयादिपर्यायगतं—व्याख्यातम्। तत्र हि "पूर्वस्ये"त्यनेनान्नमयादीनां ग्रहणमित्यवश्यमङ्गीकरणीयम्। तथाच पूर्वस्यानिरुद्धादेः प्रद्युम्नादिर्नियामक इति विवरणं कथमपि न संभवति। न हि स्वनियम्यः स्वयमेव भवति॥

"तेनैष पूर्णः" इति पूर्वपूर्वेणोत्तरोत्तरस्य पूर्णत्वं यदुक्तम्, तदिदं उत्तरस्य पूर्वाऽऽन्तरत्वमेव गमयति।

एतेन—तेन आनन्दमयेनैष विज्ञानमयः पूर्णः-निश्छिद्रतया व्याप्त इति प्रकाशप्रसरोक्तम्—अपास्तम्। "अन्योऽन्तर आत्मा प्राणमयो मनोमयो विज्ञानमय आनन्दमय इति वाक्यानन्तरं प्रवृत्ते हि "तेनैष पूर्ण"इति प्रतिपर्यायगते वाक्ये एतच्छब्देनाव्यवहितपरामर्शिनोत्तरोत्तरस्य तेनेत्यनेन पूर्वपूर्वस्य ग्रहणमेव युक्तम्, नोत्तरोत्तरस्य तच्छब्देन पूर्वपूर्वस्यैषशब्देन च। तथाचोत्तरेणानन्दमयेन पूर्वस्य विज्ञानमयस्य पूर्णत्वविवरणमसंगतमेवेत्यन्नमयादिसर्वात्मतावादो नात्र युज्यते। नहि प्रद्युम्नोऽनिरुद्धेन व्याप्तः; स्वस्य स्वव्याप्तत्वासंभवात्। विशेषबलान्निर्वाहस्तु विज्ञानमयेनानन्दमयव्याप्तत्वेऽपि संभवतीति व्यर्थं विज्ञानमय आनन्दमयेन व्याप्त इति विवरणम्। एतेन—अनन्तत्वविवरणमानन्दमयपर्या-

येण क्रियत इत्यपि—परास्तम् । प्रतिपर्यायमुक्तवाक्यसत्त्वेन सर्वेषामनन्तत्वव्याख्यानरूपत्वमन्नमयव्यतिरिक्तानां भवेदेव ॥

एतेन—"स वा एष पुरुषविध एव । तस्य पुरुषविधतामन्वयं पुरुषविधः" इति वाक्ये अपि—व्याख्याते । "स वा एष" इति तदेतच्छब्दाभ्यां हि पूर्वं "तस्माद्वा एतस्मादि"ति तदेतच्छब्दनिर्दिष्टान्नमयादिकमेव प्रत्यभिज्ञायते, नतु केवलैषशब्देन 'तेनैष पूर्ण" इति वाक्यपरामृष्ट उत्तरोत्तर इति पूर्वपूर्वस्यात्मत्वेन निरूपितस्यात्मनः सादृश्यमेव, न वस्तुगत्याऽऽत्मत्वमित्येव बोध्यते प्रथमवाक्ये, द्वितीयवाक्ये तु पूर्वपूर्वस्यात्मनः सादृश्यमनु लक्ष्यीकृत्य पुरुषविध एव प्राणमय एव पुरुषविध इत्येवार्थः । तथाच वृक्षमनु विद्योतते विद्युदित्यादौ विद्योतमानविद्युदुपलक्षणत्वं यथा वृक्षस्यवमन्नमयस्य पुरुषविधत्वोपदेशः प्राणमयपुरुषविधत्वोपदेशार्थ इति फलितम् ॥

एतेन—आनन्दमयपर्यायगते उक्तवाक्ये अपि—व्याख्याते । यत्तु प्रकाशप्रसरे—"स वा एष पुरुषविधः" आनन्दमयनामा नारायणः पुरुषाकार एव । तस्यानन्दमयनाम्नो नारायणस्य पुरुषकारतामनुसृत्य विज्ञानमयनामा वासुदेवः पुरुषाकार इति--विवृतम्, तदिदमपि पूर्वोक्तप्रकारेण केवलैषशब्देन व्यवहितविज्ञानमयपरामर्शासंभवादुक्तप्रत्यभिज्ञाविरोधेन तदेतच्छब्दाभ्यामव्यवहितपरामर्शासंभवच्चानुपपन्नमित्येव—सूचितम् ॥

अत्रानन्दमयस्यापि पुरुषविधत्वं यत् बोधितं तेनेदमवगम्यते तदतिरिक्तः कोऽप्यात्मा वर्तत इति युक्तमानन्द आत्मेत्यानन्दस्यात्म-

SGDF Sri Gangeshwari Digital Foundation

त्वनिरूपणम्। आनन्दत्वाज्ञानमेव खलु प्रपंचात्मना विवर्तनिदानमिति पूर्वमेव विवेचितमित्यानन्दरूपमेव ब्रह्मेति विनिर्णयः यदर्थमियमुपदेशरीतिराद्वृता "आनन्द आत्मा' इत्यनेनैव सिद्ध्यत्येव ॥

एवमपि तदानन्दपदार्थः ब्रह्म वाऽन्यद्वेति संशयनिरासपूर्वकं प्रक्रान्तोपदेशशैलीरक्षणार्थं च "ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्यान्तरं प्रवृत्तम्। अनेन च गुहानिहितमानन्दरूपं ब्रह्मैव "ब्रह्मविदाप्नोति परमि"ति ज्ञेयतया प्रतिज्ञातमिति गम्यते ॥

अत एव—"असन्नेव स भवती"ति तस्यापि ब्रह्मणः प्रतिष्ठितत्वं नास्तीति बोधनानन्तरं "तस्माद्वा एतस्मादि"त्युपक्रान्तकारणत्वमपि तस्यैव पुनरपि"सोऽकामयते"त्यादिवाक्येनोपपाद्य-"कोऽह्येवान्यात् कः प्राण्यादि"त्यादिनाऽऽनन्दत्वेनैवोपसहारादिकं क्रियमाणमुपपद्यते ॥

यदत्र प्रकाशप्रसरे-"आनन्द आत्मे"त्यस्य मध्यदेह इति"ब्रह्मपुच्छं प्रतिष्ठे"ति वाक्ये ब्रह्मशब्देन प्रधानवायुर्गृह्यते इति निरूपितम्, तदिदमात्मशब्दस्य मध्यदेहवाचित्वस्यान्यत्राक्लृप्तत्वात्, अवयवत्वेनापि ब्रह्मैव निरूप्यते। अवयविभेदोऽवयस्यापरमितशक्तित्वेन परमात्मविषये नापेक्षित इत्यादिना पूर्वं ब्रह्मण एवावयवत्वमिति प्रकाशप्रसरकारैरेव पूर्वमुपपादनेन पूर्वापरविरोधाच्चाकिंचित्करम् ॥

एतेन—भाष्ये तु—आनन्दमयाख्यो नारायणः पुनर्नारायणादिरूपेण पंचधा भिन्नः शिरःप्रभृत्यवयवात्मना ज्ञेय इत्युक्तमिति प्रकाशप्रसरोक्तम्—अपास्तम। एकस्यैवावयवावयविभावायो-

SGDF Sri Gangadharan Digital Foundation

गादिः प्रक्रमभङ्गापत्त्या पूर्वमेवोपपादितः । किंच "सत्यं ज्ञानमनन्तं ब्रह्मे"ति वाक्येन स्रष्टृत्वादिकं प्रत्येकलक्षणमित्येव खलु भवतामभिमतम् । तथाच कुत्रचिदन्नमयादिवाक्येषु लक्षणत्रितयबोधनं कुत्रचिच्च प्राणमयादिषु लक्षणान्तरकथनं च यदि विवक्षितम्, तर्हि ब्रह्मानेकतावाद एव भवतामनुपपन्नः स्यात् । विशेषबलेन रूपभेदानाँ व्यवस्थायामङ्गीक्रियमाणायामपि सत्यज्ञानवाक्यबोधितैकब्रह्मबोधनं कथं वोपपद्येत । सत्यादिवाक्ये ह्यत एवैकब्रह्मपदाम्नानमुपपद्यते । एवंचैकब्रह्मोपक्रमविरुद्धमेवेदं ब्रह्मपंचकमतम् ॥

एतेन—भेदप्रतिनिधिविशेषेणादनप्राणनादितत्तद्गुणप्रदातृत्वस्य व्यवस्थया प्रकाशनात् नामभेदः पंचत्वसंख्यादिकं च युक्तमिति प्रकाशप्रसरोक्तं—अपास्तम् । नहि वयं विशेषबलेन गुणप्रदत्वव्यवस्था न संभवतीत्यत्र वदामः, किन्तु सत्यं ज्ञानमितिपदत्रयबोधितगुणषट्कस्योपक्रमगतस्य कथं वाक्यषट्केन व्यवस्थापनं क्रियतइत्येव ॥

वस्तुतस्तु—जगत्स्रष्टृत्वरूपसत्यत्वनिरूपणं "तस्माद्वा एतस्मादि"ति शैल्या पदार्थान्तरनिरूपणमपरशैल्येति वैरूप्यप्रसंगोऽपि भवतां समापतति । "अन्नात्पुरुष"इत्येतदन्तेनान्नवायुशरीरादिकारणत्वनिरूपणेनैवादनप्रणनादिहेतुत्वमप्यर्थसिद्धम् । एवंपञ्चभूतकारणस्य ब्रह्मणः तत्कार्यमनआदिकारणत्वमप्यर्थसिद्धमिति जगत्स्रष्टत्वाँशमात्रपरित्यागेन पदार्थपंचकमात्रविवेचनं किन्निबंधनमित्यपि पर्यनुयोगोऽसमाधेयःसमापतति । एवंच यदि भवताँमत-

SGDF
Sri Gargeshwari Digital Foundation

रीत्या स त्यंज्ञानमित्यत्र पदार्थषट्क विवक्षितम्, तर्हि सृष्टिवाक्येनापि प्रद्यु म्नादिभिन्नं कथं ब्रह्मान्तरं न व्यवस्थाप्यते ?

परमार्थतस्तु—स्रष्टृत्वनिरूपणस्य "तस्माद्वा एतस्मादात्मन आकाशः संभूत" इत्यनेनैव कृतत्वात् "आकाशाद्वायुरि"त्यादिवाक्यैरपि विशेषबलेन भिन्नभिन्नानेकब्रह्मवादः कथं न संभवति ?

एतेन—"आत्मन आकाशः संभूत इत्यदावाकाशपदेन तदन्तर्याम्यादिचतुष्टयविवक्षणमपि—परास्तम् ; वैयर्थ्यात् । तथाचैकब्रह्मतावादो वोरीक्रियतामनवधिकब्रह्मवादो वा । सर्वथा ब्रह्मपञ्चकतावादो न भवतामुपपद्यते । अनेकब्रह्मवादे चानन्दमयोऽभ्यासादितिसूत्रणं न युक्तम् । "तस्माद्वा एतस्मादात्मन" इत्यादौ अभ्यासाभावात् । यदि त्वभ्यासाभावेनैवान्नमयादीनामेवात्र विवक्षितोऽभ्यासः सचब्रह्मपदाभ्यास इति यदि विवक्ष्यते, तर्हि "असन्नेव स भवती"ति वाक्यस्यैव ग्रहणं भविष्यति, नान्यस्येति तच्छ्लोकोपपद्य "ब्रह्मपुच्छमिति" वाक्यमेवोक्तसूत्रविषय इत्यकामेनाप्युपगमनीयम् ॥

एतेन—"असन्नेव स भवतीति" श्लोकोऽपि—व्याख्यातः ॥ पूर्वतनशैलीपरित्यागेन प्रक्रान्तशैल्यन्तरपतितवाक्ये प्रक्रमभङ्गापादनमुपहासास्पदमेव । यथा हि अन्नमयपर्यायेऽन्नसंकीर्तनेनान्नमयोपस्थितिः, यथावा प्राणमयपर्याये प्राणमिति प्राणशब्देन: प्राणमयप्रत्यासत्तिः, यथावा मनोमयविज्ञानमयपर्याययोः "अप्राप्य मनसा" "विज्ञानं यज्ञमि"ति मनोविज्ञानशब्दाभ्यां मनोमयविज्ञानमययोः सन्निधानम्, नेवमानन्दमयपर्याये असन्नेवेति श्लोक आन-

SGDF
Sri Gargeshwari Digital Foundation

न्दपदाम्नानमिति न तद्विषयोऽयं श्लोकः, किन्तु असद्ब्रह्मेति ब्रह्म शब्दाम्नानेन पुच्छब्रह्मविषय एवेति युक्तमुत्पश्याम इति शैत्यन्तरेणोपदेशपरिसमापनमपि प्रमाणयामः ॥

यत्तु प्रकाशप्रसरे पञ्चरूपं ब्रह्म जीवान्यादित्यर्थे श्लोकोऽप्यस्तीत्यर्थः। पञ्चरूपं ब्रह्म जीवव्यतिरेकेण नास्तीति वदे चेत्, सोऽसन्नेव दुःख्येव भवति। असत् पदस्य दुःखिबोधकत्वादिति वर्णितम्, तदिदमसत्पदेन सञ्जोवस्वरूपविवक्षाया अप्रामाणिकत्वात् भवदीयमुक्तजीवस्यादुःखिन एवात्र विवक्षेति शंकान्तरनिरासासंभवात् पूर्वतनपर्यायइव प्रायपाठार्थं श्लोकस्यैकविषयत्वस्यैव युक्तत्वाच्चानवसरमेव। एतेन—सूत्रभाष्येतु आनन्दमयमात्रपरः श्लोकोव्याख्यात इति प्रकाशप्रसरोक्तमपि—परास्तम्। पूर्वोक्तरीत्याऽऽनन्दपदानाम्नानपुरस्सरं प्रवृत्तस्यासन्नेवेति श्लोकस्यानन्दमयविषयत्वं हि बाधितमेव ॥

एते—"तस्यैष एव शरीर आत्मा। यः पूर्वस्ये"ति वाक्यमपि—व्याख्यातम्, भिन्नभिन्नवाक्यगतयोः तस्यपूर्वस्यपदयोः सामानाधिकरण्येनान्वयायोगेन तस्यानन्दमयस्य एष एव ब्रह्म पुच्छमेव शारीर आत्मा यः पूर्वस्य विज्ञानमयस्यात्मेति विवरणमेव युक्तम् ॥ प्राणमयादिपर्यायेतु श्लोकस्यावयविविषयत्वात् भिन्नवाक्यगतयोरपि सामानाधिकरण्येनान्वयः नैव कृतः। अत्रतु पुच्छविषयत्वात् श्लोकस्य तस्येत्येनेनानन्दमयपरामर्शस्सोपपत्तिक एव। अत्र पर्यायान्तरादयं विशेषो यत् तस्यशब्देन श्लोकगतेन व्यवहितपरामर्श एव क्रियत इति तन्मुख्यार्थता परिपाल्यते। नहि

SGDF
Sri Gargeshwari Digital Foundation

प्रायपाठः सन्निधिरूपः श्रुतिबाधनक्षम इति पूर्वतनपर्यायेषु बाधात् भिन्नवाक्यगतयोरपि सामानाधिकरण्यं तस्यैतस्यैतस्यैत्यर्थाङ्गीकारेण स्वीकृतं चेदप्यत्र तथाऽङ्गीकारो न युक्त इति सिद्धम् । एतेन—तस्य विज्ञानमयस्य पूर्वस्य एष आनन्दमय आत्मा शारीरो देहिरूपात्मेति प्रकाशप्रसरोक्तम्—अपास्तम् ॥

अत्रेदं विचारणीयम्—वासुदेवादीनां नारायणादिदेहत्वं भवदभिमतं किं तदवच्छेदेन भोक्तृत्वम्, उत तदन्तर्यामित्वम् । आद्ये—अन्नमयादीनां चेतनानां स्वत एव सुखानुभवयोग्यानां अन्यसुखावच्छेदकत्वासंभवः । द्वितीये अस्मदादिशरीरेऽप्यन्तर्यामितया शारीरात्मत्वं संभवतीति व्यर्थमन्नमयादिभिः परमात्मग्रहणम् । अस्तुवा कथंचित् शारीरत्वेन परमात्मन एव ग्रहणमिति । एवमप्यत्र शारीरत्वनिरूपणं किमर्थम् ? पुरुषविधत्वनिरूपणार्थमिति वक्तव्यम् । एवंच सत्यन्नमयस्य शारीरत्वमनाम्नातमिति कथं वैकजातीयब्रह्मपंचकनिरूपणं भवतां संभवति ? अस्मन्मतेतु मुख्यान्तरात्मत्वं पुच्छब्रह्मण एकस्यैव विवक्षितमित्युत्तरोत्तरमेव शरीरत्वान्तरत्वाद्याम्नानं सर्वथोपपद्यते ।

वस्तुतस्तु-एकस्यैव परमात्मनोऽवयवावयविभाव इव देहदेहिभावोऽपि नोपपद्यते । विशेषबलेन निर्वाहस्तु स्थितस्य गतिचिन्तनार्थमेव कर्तव्यः । नहि ब्रह्मपंचकमेवात्र निरूप्यत इत्येतावताऽपि सिद्धम् । कति वा वैरूप्याणि प्रायपाठविरोधादयो भवतां समापद्यन्त इति भवन्त एव पश्यन्तु ॥

संमतं हि भवतामप्यन्नमयादिपदेन तत्कोशोऽपि विवक्ष्यत

SGDF
Sri Gurgeshwar Digital Foundation

इति। तदुक्तं—प्रकाशप्रसरे तत्र परिदृश्यमानशरीरेऽन्तः चत्वारः कोशा सन्ति। तत्क्रमश्चान्नमयकोशः प्राणमयकोशः तदन्तर्मनोमयकोशः तदन्तर्विज्ञानमयकोशः तदन्तरानन्दमयकोशश्चेति। तथाचोभयाभ्युपगतकोशपरत्वेनैव सर्वेषां वाक्यानामुपपत्तौ किमिति तदन्तस्थानिरुद्धादीनामुक्तवाक्येषु ग्रहणं कर्तव्यम्? "अन्नं ब्रह्मे"ति व्यजानादित्यादिकं हि मयडश्रवणात् कोशपरमिति कल्पनायामेव स्वरसं भवति। यथाह्यन्नविकारोऽन्नशब्देन व्यवहर्तुं योग्यः यथा मृद्विकारो घटो मृत्पदेन, नैवमन्नप्रचुरोऽन्नशब्देन व्यवहर्तुं योग्यः। एतेन—अन्नमय इत्यादौ मयटो न विकारार्थत्वं किन्तुः प्राचुर्यार्थत्वमेवेति प्रकाशप्रसरोक्तम्—अपास्तम्। एतेन—आनन्दमयपर्यायान्तगतश्लोकेऽऽनन्दपदप्रयोगः आनन्दमयपदेऽपि मयड् न प्राचुर्यार्थ इत्यमुमर्थं गमयतीति—सूचितम्। सर्वथातु "अन्नं ब्रह्मेति व्यजनादि"त्यादिश्लोकस्वारस्यार्थमन्नमयादिपदानामुभयाभ्युपगतकोशपरत्वमेवोरीकरणीयम्, नतु परमात्मपरत्वम्॥

एवंच विशेषबलेन देहदेहिभावोपपत्त्यादिवर्णनमप्यनवसरमेव। यथाचान्नमयादिपरमात्मत्वे—"तस्येदमेव शिरः" इत्यादीनामपि नोपपत्तिस्तथा पूर्वमेव विवेचितम्। नह्यनिरुद्धस्य शिर इदंपदेन गृहीतुं शक्यम्; अप्रत्यक्षत्वात्। उपचारेणेदंपदस्यापि प्रवृत्तिरित्यादिवर्णनं तु कथं वा शोभते? तथाच प्रायपाठबापधानेकोपचाराप्रसिद्धानुपपन्नानेकपदार्थकल्पनादिबहुदोषदुष्टत्वादन्नमयादिब्रह्मतावादोनात्र संगच्छते। एतावताप्रपंचेनाद्वैत्यभिमतएव

SGDF
Sri Gargeshwari Digital Foundation

ब्रह्मवल्ल्यर्थ उपपद्यते, नानन्दतीर्थमतसंमत इति निरूपितम् ॥

इतः परं तु पुच्छब्रह्मवादेऽद्वैत्यभिमते प्रकाशप्रसरापादितानुपपत्तिपरिहारः करणीयस्समुपस्थित इति तत्रैव लेखिनीं व्यापारयामः। तत्र यत् प्रकाशप्रसरे—सत्यज्ञानादिपदानां चिन्मात्रपरत्वे पदान्तरवैयर्थ्यमित्युक्तम्, तदिदमद्वैतसिद्ध्यादिषु सत्यादिविरोधिव्यावृत्तिबोधनार्थत्वेन व्यावृत्तेर्ब्रह्मरूपत्वेनाद्वैताविरोधोपपादनपूर्वकं निरासितमेव ॥

यत्तु प्रकाशप्रसरे—चिन्मात्रस्य स्वप्रकाशतया शास्त्रवैयर्थ्यम्, संशयाविषयत्वादिदूषणादि च न्यायामृतादौ व्यक्तमित्युक्तम्, यच्च "आत्मन आकाशः संभूत" इत्यत्रोपहितग्रहणायोग इत्यादि चोक्तं तत्पूर्वमेव परिहृतमिति न पिष्टपेषणार्थं प्रवर्तामहे ॥

एतेन—यत् "स वा एष पुरुषोऽन्नरसमय" इत्यन्नविकारदेहपरामर्शाङ्गीकारे रसशब्दवैयर्थ्यमित्युक्तम्, तत्र न्यायरक्षामण्युक्तरीत्या शरीरावच्छिन्नचैतन्यस्यैव ग्रहणमित्यङ्गीकारे रसपदं शरीरसमर्पणार्थमपेक्षितमेव। मतान्तरेऽपि अन्नस्य भुक्तस्य सारांशानां केषांचन सूक्ष्मभूनामेव शरीरपरिणामकारणत्वाद्रसशब्दप्रयोग उपपन्न एव। तच्छब्दस्य तु सार्थक्यं शरीर आत्मताबोधनार्थत्वेन पूर्वमेव निरूपितम् ॥

परमार्थतस्तु—"तस्माद्वा एतस्मादात्मन आकाशः" इति तदेतच्छब्दाभ्यामात्मोपदेशोपक्रमेणान्नरसमयं शरीरमुद्दिश्यापि तदेतच्छब्दाभ्यामात्मोपदेशकरणमेव युक्तमिति तदेतच्छब्दाभ्यामुभाभ्यामप्यात्मपरामर्शस्यैव विवक्षितत्वात्, अन्नरसमय इत्येत-



SGDF
Sri Gangadharesh Digital Foundation

न्मात्रस्यैवोद्देश्यसमर्पकत्वादुपक्रमपरामर्शोपसंहारैकरूप्यार्थं तच्छब्दग्रहणमपेक्षितमेव। मतान्तरेतु यत्रैषशब्देनापि अन्नमयकोशस्थः परमात्मैव गृह्यते तत्र तच्छब्दसार्थक्यं कथमपि न संभवति। नहि तेषां अन्नरसमयपदमुद्देश्यसमर्पकम्, अज्ञातार्थत्वात्। अन्यथा 'अन्नात्पुरुष' इत्यनेनैव तत्कारणत्वविज्ञानेऽन्नमयवाक्यमेव व्यर्थं समापतितम्। "तस्माद्वा एतस्मादि"त्यत्र तु सत्यज्ञानानन्तपदत्रयबोधितसर्वलक्षणलक्षितं स्वरूपमेव ग्रहीतव्यमित्यस्मदुक्तरीत्यां शक्तिद्वयमात्रविशिष्टानिरुद्धपरामर्शस्तदेतच्छब्दाभ्यां न संभवति।

एतेन—मतान्तरे—एषशब्दासाधुताऽपि—व्याख्याता। नहि भवतामनिरुद्धः परमात्मा पूर्वप्रकृतः कस्यापि प्रत्यक्षो वा। एतेन "तस्येदमेव शिर"इत्यपि तेषां प्रतिकूलमिति—सूचितम्। यत्तु सिद्धान्तेतु "इदं शिर"इत्यादिनिर्देशस्य तदन्तस्थलक्षकत्वादित्युक्तम्, तदिदं तैरेव लक्षणादोषदुष्टस्यैव व्याख्यानस्योरीकरणादनादरणीयमेव। नह्यत्र लक्षणागमकं किमपि भवतां समस्ति। एतेनान्योऽन्तर आत्मेत्यप्यद्वैतिनामेवानुकूलं स्वरसं च न प्रकाशप्रसरकारादीनामिति सिद्धम्॥

यत्तु प्रकाशप्रसरे—अन्यत्वाद्युक्तिस्तु अधिष्ठानभूतकोशानामन्यत्वान्तरत्वाभ्यां लक्षणया ब्रह्मणो बहुरूपत्वेन विशेषबलाद्वाऽचिन्त्यैश्वर्यबलाच्चोपपन्नेत्युक्तम्, तदिदं "अनन्योऽप्यन्यशब्देन तथैको बहुरूपवानि" त्यनुव्याख्यानेऽन्यत्वादीनां परमात्मपरत्वस्यैवोपपादनेनाधिष्ठानकोशपरत्वायोगात्, योगेच तावतैवेष्टसिद्ध्याऽतिरिक्तपरमात्मपरत्वस्यापि वाक्यभेदापत्त्या ग्रहणायोगा

SGDF Sri Gangeshwari Digital Foundation

तात्पर्यग्राहकाभावेन लक्षणाङ्गीकारस्यायोगात्, विशेषबलादिना तदुपपादनायोगस्य बहुधोपपादितत्वाच्चानवसरम् । "येऽन्नं ब्रह्मोपासते" इत्यादौ वाक्यशेषे हि "वाचं धेनुमुपासीते" त्यादाविव अन्नविकारे शरीर आत्मत्वोपदेश उपासनार्थमेव, नतु ज्ञानार्थमित्यवगतमिति ब्रह्मशब्दसमभिव्याहारमात्रं न ज्ञेयब्रह्मतालिङ्गमिति कल्पनं संभवति ॥

एतेन—प्राणमयादिपर्यायगतब्रह्मशब्दोऽपि — व्याख्यातः । तत्रापि "ये प्राणं ब्रह्मोपासते" "विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते"इत्युपास्तिश्रवणात् । मनोमयपर्याये उपासनाविध्यश्रवणेऽपि "मनो ब्रह्मे"ति सामानाधिकरण्याम्नानं नोपलभ्यत इति न मनोमयब्रह्मता वाक्यशेषेणोपपादयितुं शक्यते । अत्र हि श्लोके मनसेति तृतीयान्तप्रयोगेण करणत्वमेव मनसः प्रसक्तमनूद्यात्मत्वोपदेशः क्रियत इत्यवगमात् मन आत्मतावादासङ्गत्यमित्यात्मत्वमत्राप्युपासनार्थमिति गम्यत एव ॥

"असन्नेवे"ति श्लोके तु "अस्ति ब्रह्मे"ति चेद्वेदे"ति प्राधान्येन ब्रह्मनिर्देश उपक्रान्तविदधातुनोपसंहारश्च वर्तत इति "ब्रह्मविदाप्नोति" वाक्यगतब्रह्मविद्विवरणमेव क्रियत इति विशषस्सर्वविदित एव । एतेन—येऽन्नं ब्रह्मोपासते" "आनन्दं ब्रह्मणो विद्वान्" "विज्ञानं ब्रह्म चेद्वेद" "अस्ति ब्रह्मे"ति पंचस्वपि प्रकरणेषु प्रत्येकं ब्रह्मशब्दस्यात्मशब्दस्य च श्रवणात् ब्रह्मशब्दश्रुतिर्वर्ततेऽन्नमयादिब्रह्मतायामिति प्रकाशप्रसरोक्तम्—अपास्तम् । उपास्यसमर्पकब्रह्मशब्दस्योपसनालम्बनसामानाधिकरण्येन प्रयुक्तस्य स्व-

SGDF
Sri Gurgiabhavan Digital Foundation

प्राधान्येन ब्रह्मसमर्पकत्वं न संभवति। "ब्रह्म ज्येष्ठमुपासते" इत्युपासनोपक्रमात् "विज्ञानं ब्रह्म चेद्वेदे" त्यत्रापि विज्ञानालंबनब्रह्मोपासनमेव हि विवक्षितम्। "अस्ति ब्रह्मे"ति चेद्वि"त्यत्र तु स्वप्रधानतयैव ब्रह्मनिर्देशो वर्तते, नानन्दविशेष्यतयेति युक्तं ब्रह्मपरत्वं तदुपपाद्यवाक्यगतब्रह्मपदस्य। पूर्वतनपर्याये ह्यन्नमयाद्यवयविपरत्वमिति हि—अन्नमित्यादिपदेनैवावगम्यते, आनन्दमयपर्यायेऽतु ब्रह्मशब्दमात्रश्रवणेन पुच्छवाक्यविषय एवायं श्लोक इति सम्यगेवावगम्यत इत्युक्तरीत्या पुच्छब्रह्ममात्रस्यैव ब्रह्मत्वं नान्नमयादीनाम्। "अन्नं ब्रह्मे"त्यादौ ब्रह्मशब्दस्य गौणत्वस्यैवोरीकरणीयत्वात्॥

एतेन—"अद्यतेऽत्तिच भूतानि।" इत्यादिकमपि—व्याख्यातम्; तस्याप्युपासनार्थत्वात्। उपासकप्राप्यत्वं न ब्रह्मासाधारणलिङ्गम्; अभ्युदार्थोपासनादिप्राप्यस्वर्गादीनां क्रममुक्त्यर्थोपासनाप्राप्यहिरण्यगर्भादीनां चापरमात्मत्वात्। नह्यत्र मोक्षप्राप्तिः फलमाम्नायत इत्यपि स्पष्टमन्यत्र विवेचितम्। तथाच श्रुतिलिङ्गादिभिरन्नमयादीनां ब्रह्मत्वमिति प्रकाशप्रसरोक्तमनवसरमेव॥

अत्रेदं विचारणीयम्—"असन्नेव स भवति" इति श्लोके "तस्यैष एव शारीर आत्मा। यः पूर्वस्ये"ति एष इति पुंलिङ्गनिर्देशः पुच्छब्रह्मविषयत्वे कथमुपपद्यत इति? अत्रेदं समाधानम्—विशेष्यप्रधानत्वात् विशेषणस्यात्मेति पुंलिङ्गानुसारेण पुंलिङ्गनिर्देश उपपद्यत इति। एतेन—"सोऽकामयते"ति पुंलिङ्गनिर्देशोऽपि—

SGDF
Sri Gargeshwari Digital Foundation

व्याख्यातः ; "एष आत्मे"त्यव्यवहितनिर्दिष्टात्मपदाभिप्रायेण तदुपपत्तेः ॥

एतेन—"सोऽकामयते"ति संकल्पपूर्वकं स्रष्टृत्वसर्वान्तरत्वादिकमानन्दमयब्रह्मतालिङ्गमिति प्रकाशप्रसरोक्तम्—अपास्तम्। "सोऽकामयते"त्यादीनां सर्वेषां पुच्छब्रह्मविषयत्वेनानन्दमयविषयत्वाभावात् ॥

"यदेष आकाश आनन्दो न स्यादि"त्यपि पुच्छब्रह्मविषयमेव, नानन्दमयविषयमिति श्रुतिलिङ्गादिकं सर्वं पुच्छब्रह्मवादस्यैवानुगुणं नानन्दमयब्रह्मतावादस्य। एतेन—श्रुतिलिङ्गाद्यनुसारेणान्नमयादिब्रह्मतावाद एव युक्त इति प्रकाशप्रसरोक्तम्—अपास्तम्। एतेन—"एतमन्नमयमात्मानमुपसंक्रामती"त्यादिवाक्यमपि—व्याख्यातम्। एतानि हि वाक्यानि क्रममुक्तिप्रदर्शनपराण्येव, न मुख्यमुक्तिप्रदर्शनपराणि। व्यष्टिशरीरोपासनेन समष्टिशरीरप्राप्तिरित्यादिकमेवात्र बोध्यते। अत एव—"स एको ब्रह्मण आनन्द" इति हिरण्यगर्भानन्देन परिसमापनमुपपद्यते। तथाचान्नमयाद्युपासकानां तादृशहिरण्यगर्भं प्राप्तानां मध्ये आनन्दमयोपासकस्यानन्दप्राचर्यं वर्तत इत्यत्र न विशयलेशोऽपि ॥

यत्तु प्रकाशप्रसरे ब्रह्मवल्लीसमाख्यानमन्नमयादीनां ब्रह्मत्वं गमयतीत्युक्तम्, तदिदमेतत्प्रकरणपठितानामाकाशवाय्वादीनामपि ब्रह्मत्वापत्त्या पुच्छब्रह्मवाक्यस्य ब्रह्मसमर्पणत्वेन तच्छेषतयाऽप्यन्येषामुपपद्यत इति वाऽन्नमयादिवाक्येष्वपि ब्रह्मोपासनाविशेषस्य विवक्षितत्वेन वोपपद्यत इति न विरुद्धम् ॥

SCDF

एतेन—भृगुवल्ल्यपि—व्याख्याता । साहि ब्रह्मवल्ल्युक्तस्यै-वार्थस्य शैल्यन्तरेण स्पष्टीकरणार्थं प्रवृत्तेत्येकाङ्गीकरणीयम् । अत्र हि "सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिते"ति वाक्येन "यदेष आकाश आनन्दो न स्यादि" वाक्यार्थः प्रत्यभिज्ञायत इति पुच्छब्रह्मपर्यवसानमेव गम्यते । अन्यथा पञ्चब्रह्मतावादे "सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिते"ति वाक्ये परमे व्योमन्नित्येकवचननिर्देशो नोपपद्यते । अत्रच "आनन्दो ब्रह्मेति व्यजानात्" इत्यत्रानन्दशब्देनामयडन्तेनानन्द आत्मेति वाक्यार्थः संगृहीत इति तत्प्रतिष्ठारूपपरमव्योमशब्दार्थः पुच्छं ब्रह्मैवोत्तरवाक्ये पर्यवसितवाक्यर्थतया विवक्षितुं शक्यत इति सिद्धम् । "य एवं वेद प्रतितिष्ठति" इति प्रतिष्ठाफलश्रवणमप्यानन्दवाक्यमात्रविषयमेव । अत एव—"अन्नवानन्नादो भवती"त्यादिनाऽन्नादिब्रह्मवेदनात्तदुपासनापरपर्यायात समष्ट्यन्नप्राप्तिरूपं फलं निर्दिश्यमानमुपपद्यते । इदमत्र प्राणाद्युपासनानामप्युपलक्षणम् । यथाक्रतुन्यायेन तेषामपि समष्टिप्राणमयादिप्राप्तेरर्थसिद्धत्वात् ॥

ब्रह्मवल्ल्यां—"स एको ब्रह्मण आनन्द" इत्यनन्तरं "स यश्चायं पुरुषे । यश्चासावादित्ये । स एक" इति जीवब्रह्मणोरभेदमुपक्षिप्यानन्तरं अन्नमयं प्राणमयं मनोमयं विज्ञानमयमानन्दमयमुपसंक्रमतीति निरूप्य तावतैवानुपसंहारेण "यतो वाचो निवर्तन्ते" इति वाङ्मनसाऽपरिच्छेद्यब्रह्मानन्दावाप्त्यात्मकफलेनोपसंहारो हि आनन्दमयातिरिक्तमेव ब्रह्मस्वरूपं स्पष्टमेव गमयति ।

SGDF Sri Gangadhar Digital Foundation

एतेन—एतत्समानानुपूर्व्या भृगवल्ल्या उपसंहारोऽपि व्याख्यातः। तत्र ह्यानन्दमयोपसंक्रमणानन्तरं सर्वतादात्म्यभावमेव परमं फलं बोध्यते। अत एव "आनन्दमयमुपसंक्रम्ये"त्यपरिसमाप्तिद्योतकल्यबन्तनिर्देश उपपद्यते॥

अस्मिन्नवसरे-अन्नमयादीनामिव विज्ञानमयस्यापि शोध्यत्वं यदन्यत्र श्रुतं तदप्यस्माकमेवानुकूलं भवति। तथाचान्नमयाद्यात्मत्वोपदेशो द्वारतयैव विवक्षितः, नतु मुख्यतया। अत एव ब्रह्मवल्लीविवरणरूपभृगुवल्ल्यां—"अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमि"ति षण्णां ब्रह्मत्वोपदेशोऽप्युपपद्यते। तत्र कोशपंचकस्योपलक्षणत्वमेवोरीकर्तव्यम्। मतान्तरेतु अनिरुद्धादीनामन्नादिशब्देनात्र ग्रहणे कथमिव षण्णां ग्रहणमुपपद्यते? यतो वेत्यादिकं तटस्थलक्षणमेवेति पूर्वमेव विवेचितमिति न तावन्मात्रानुसारेणान्नादिपृथक्ब्रह्मतावादो युज्यते॥

वस्तुतस्तु—अन्नं ब्रह्मेति व्यजानात्" इत्यादौ अनिरुद्धादीनामेव ग्रहणं विवक्षितं वा न वा। आद्ये एकैकस्य व्यवस्थया जगत्संहर्तृत्वादिधर्माणां भवद्भिरङ्गीकारेण लक्षणचतुष्टयवत्त्वेन सर्वेषां ग्रहणं नोपपद्यते। एवं "सत्यं ज्ञानमि"त्यत्र भवदुक्तार्थचतुष्टयमध्ये मोक्षदत्वस्याभावात् सत्यपि प्राणमये स्रष्टृत्वजीवनप्रदत्वसंहर्तृत्वरूपार्थत्रयसंम्बंधस्याविवक्षिततत्वेन—"प्राणाद्धेव खल्विमानी" त्यादीनामसाङ्गत्यापातान्नोपपत्तिः। द्वितीयमतं तूभयोरेकार्थत्वभङ्गापत्त्या न सङ्गतम्। तथाचान्नमयादिषु सर्वत्र वाक्येषु एकरूपमेव ब्रह्म विवक्ष्यत इत्यकामेनाप्युपगमनीयमित्ये-

SGDF
Sri Gurgadhanani Digital Foundation

कस्यैवान्यत्वेनान्यत्वेन निर्देशस्य वैफल्यात् द्वारतयैवान्नमयादि-वाक्यानि प्रवर्तितानीति सिद्धम् ॥

एतेन—श्रुतिलिङ्गादिभिः भृगुवल्युदितान्नप्राणादेर्ब्रह्मतासिद्धिरिति प्रकाशप्रसरोक्तम्—अपास्तम्; दत्तोत्तरत्वात्। यत्तु प्रकाशप्रसरे—न केवलं तत्तद्वाक्यशेषस्थलिंगबलादन्नमयादीनां ब्रह्मत्वम्, किन्तु भाष्योदाहृतश्रुत्युपष्टंभकयजुःसंहितास्मृतिभिरपि। ताश्च—"य एष भगवान् विष्णुरित्यादिका भाष्योदाहृता द्रष्टव्या इति प्रकाशप्रसरोक्तम्—अपास्तम्; उक्तस्मृतिवचनानां न्यायबाधकत्वायोगात्। सन्न्यायविरोधे स्मृतीनामपि न प्रामाण्यमिति हि कल्पसूत्राधिकरणे भाट्टदीपिकायां व्यक्तम्। अस्तु वोक्तस्मृतीनामपि प्रामाण्यम्, एवमपि अद्वैतमतेऽपि अन्नादिषु ब्रह्मोपासनायाः संमतत्वेनोपास्यब्रह्मणोऽनिरुद्धादिनामत्वोपदेशोऽप्युक्तस्मृतिभिरवगम्यत इत्येव सिद्ध्यति। न हि तावता ज्ञेयब्रह्मसमर्पणमेवान्नमयादिवाक्ये स्वीकर्तव्यमित्यलं विस्तरेण ॥

यत्तु प्रकाशप्रसरे—तथाच चतुःप्रकरण्यामुदाहृतश्लोकानामवयविविषयत्वादानन्दमयप्रकरणेपि श्लोकस्यानन्दमयविषयत्वमेव युक्तमिति वर्णितम्, तदिदं पूर्वमेव बहुधा खण्डितम्। एतेन—"तस्यैष एव शारीर आत्मे"ति वाक्ये एषशब्देनानन्दमय एव परामर्शनीय इत्यकामेनाप्युगमनीयम्। विज्ञानमयानन्दमययोरेव शारीरशरीरिभावादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्; दत्तोत्तरत्वात्। यथाच ब्रह्मशब्दाभ्यासोऽत्र हेतुतया विवक्षितो न विज्ञानमयादिसाधारणो यथाच मयटस्सर्वत्र न प्राचुर्यार्थत्वं तथा

SGDF
Sri Gargeshwari Digital Foundation

पूर्वमेव विवेचितम् ॥

अस्तुवा मयट आनन्दमय इत्यत्र प्राचुर्यार्थत्वम् , एवमपि प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वादानन्दमयशब्देन न परमात्मविवक्षा संभवति। प्रचुर्यस्य यत्र विशेषणत्वं तत्रैव स्वव्यधिकरणविजातीयाल्पतानिरूपकत्वमिति न्यायनिर्वहिः संभवति। अस्तुवा कथमपि तात्पर्यानुरोधेन स्वव्यधिकरणविजातीयाल्पतानिरूपकत्वम्, एवमपि पूर्वतने विज्ञानमयपदे प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वमेव दृष्टमिति प्रायपाठानुग्रहार्थमत्रापि स एव नियमोऽनुसर्तव्य इति ब्रह्मविद्याभरणे व्यक्तम्। परिमले तु—प्रचुरप्रकाशः संवितेत्यादिप्राचुर्यविशेषणत्वं घनतिमिरादिना सवितुरावरणलेशदशायामपि प्रामाणिकैर्विवक्ष्यते इति निरूपितम्। सर्वथा तु—प्राचुर्यस्य स्वव्यधिकरणविजातीयाल्पतानिरूप्यत्वेनानानन्दाद्यप्रसक्तेरिति प्रकाशप्रसरोक्तम्—अपास्तम्। तथाचा "सन्नेवे" ति श्लोको नानन्दमयविषय इति सिद्धम्। एतेन—ततश्च साधकभावात् बाधकाभावाच्च "असन्नेवे" ति निगमनश्लोक आनन्दमयविषय एवेति सिद्धमिति प्रकाशप्रसरोक्तम्—अपास्तम् ॥

"अथातोऽनुप्रश्नाः" इत्यादिसन्दर्भाणामप्यद्वैतमत एव स्वारस्यम्। यतः "ब्रह्मविदाप्नोति परमि" ति ब्रह्मविदो ब्रह्मप्राप्तिफले उक्ते तादृशब्रह्मण अन्नमयादिक्रमेणोक्ते—र्नहि अविदुषोऽपि ब्रह्मप्राप्तिर्वर्तत इति शंका जायते, अस्मन्मतेतु पुच्छब्रह्मेतरब्रह्मज्ञानस्य वस्तुतो ज्ञानरूपत्वाभावात् तस्य का गतिरिति प्रश्नस्य

SGDF Sri Gargeshwari Digital Foundation

विदुषोऽपि गमनपूर्वकप्राप्तिरेव वोत सुखानुभवमात्रमानन्दभाव-मात्रं वेति संशयस्समुदेत्येव । अत एव—पूर्वप्रश्ने "गच्छतो"त्यु-त्तरप्रश्ने "समश्नुते"इति च विभिन्नधातुप्रयोग उपपद्यते । एतेन—विद्वान् ब्रह्म गच्छति उताविद्वानित्येकः प्रश्न इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम् । अन्नमयादीनां सर्वेषां ज्ञेयब्रह्म-त्वेऽपि नोक्तप्रश्नस्यैवावसरः ॥

एवमुत्तरपर्यालोचनमप्यद्वैतमेव परिपोषयति । विदुषः सु-खानुभवो वर्तते वेति प्रश्नसमाधानार्थं हि "सोऽकामयत"ति बहु स्यामित्यादिरूपेण सृष्टिराम्नायमाना ब्रह्मविवर्तः प्रपंच इति सि-द्धान्तबोधनद्वाराऽऽनन्दात्मकब्रह्मभाव एव मोक्ष इति सिद्धान्त-मेव गमयति । नह्यन्यथाऽत्र पुनः सृष्ट्याम्नानस्योक्तप्रश्नोत्तरत्वं संभवति । तथाच मतान्तरे सृष्टिनिरूपणवैफल्यमपि समापतति । एतेन—भगवन्महिमज्ञान्येव मुच्यते नाज्ञानीति "रसं ह्येवे"ति वाक्यादिना विस्तरेण वक्तुं विष्णोः स्वातंत्र्यादिमहिमज्ञापनाय सृष्टिं सृष्टेषु प्रवेशं चाहोपनिषत् । स आत्मा आनन्दमय इत्यर्थः इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम् । "ब्रह्मविदाप्नोति परमि"त्यनन्तरं "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिना स्वातंत्र्यमहिमवि-शेषविशिष्टब्रह्मज्ञानस्यैव मोक्षसाधनत्वस्योक्तत्वेन पुनरुक्ततत्सं-कीर्तनस्य वैयर्थ्यात्, "सोऽकामयते"ति "एष आत्मेति" परा-मृष्टपुच्छब्रह्मण एव स्वीकरणीयत्वाच्च ॥

यत्तु "असद्वा इदमग्र आसीदि"ति, तदिदं ब्रह्मणस्सत्त्वात्मना ज्ञानमानन्दात्मनाऽज्ञानमेत्र विवर्ततागमकमिति कारणस्य तस्या-

SGDF
Sri Gangeshwari Digital Foundation

नन्दत्वज्ञानसंपादनार्थं प्रवृत्तमिति "रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दीभवती" त्यादिकमप्यद्वैतमत एव स्वरसमिति निरूद्व्याख्यातमिदम्। एतेन—अत्र नारायणाद्वासुदेवस्य प्रादुर्भाव उच्यते। "यद्वै तत्सुकृतमि" त्यादिना तस्योपसद्यत्वं व्यज्यत इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्; आनन्दमयपर्यायानन्तरं पुनर्वासुदेवोपसद्यत्वादिनिरूपणस्यानपेक्षितत्वात्। "असद्वा इदमग्र आसीत्" इतीदंशब्देन नारायणस्यानन्दमयस्य ग्रहणं कथमपि न संभवति। एतेन—असत्त्वमपि बाधितं नारायणस्य नात्र बोधयितुं शक्यत इति—सूचितम्॥

"उदरमन्तरं कुरुते" इत्यादिकमप्यत एव व्याख्यातम्; भेदनिषेधेनाद्वैतस्यैव तत्र व्यवस्थापनात्। अत्रेयमाशंका भवति—यदिदानीं सत्त्वेनेवानन्दत्वेनापि ब्रह्मज्ञानं सर्वेषां वर्तते नवेति। तन्निर्णयार्थं चेदानीमाब्रह्मानन्दमनुभूयमान आनन्दो न पूर्ववाक्ये आनन्दशब्दार्थो विवक्षित उत्तरोत्तरोत्कर्षादितारतम्यभाक्त्वात्, किन्तु तदतिरिक्तानन्दः केवलं शास्त्रवासनासिद्धान्तःकरणमात्रगोचर इति बोधनार्थमानन्दमीमांसाप्यद्वैतिनामेवोपपद्यते। नह्यन्यथाऽऽनन्दमयपदपरित्यागेनानन्दमीमांसाऽऽम्नानं स्वरसं भवति। सर्वथा च ब्रह्मवल्ल्युक्तार्थसंग्रहोऽद्वैतमतमेव परिपोषयतीत्यलमनेन विचारेण॥

तदिदं सिद्धं यत्—मन्त्रवर्णेन प्रकृतं ब्रह्म पुच्छमित्युच्यते। तद्विजिज्ञापयिषयैवान्नमयादयः पंच कोशाः कल्प्यन्त इत्यस्मद्भाष्यकारसिद्धान्तः सर्वथा निरवद्यः सर्वाङ्गसुन्दरश्चेति॥

SGDF
Sri Gurgeshwari Digital Foundation

यथाचान्नमयादीनां न ब्रह्मत्वं तथा पूर्वमेव विवेचितम्। एतेन—अन्नमयादीनां पञ्चानामपि ब्रह्मरूपताया उपपादितत्वात् इति प्रकाशप्रसरोक्तम्-अपास्तम्। तदुक्तं भाष्ये—अन्यतरपरिग्रहे तु युक्तं ब्रह्मपुच्छमित्यत्रैव ब्रह्मनिर्देश आश्रयितुम्; ब्रह्मशब्दयोगात् इति। अत्र ब्रह्मशब्दः "असन्नेव स भवती"ति श्लोकस्थब्रह्मशब्दमप्युपलक्षयति। अत एव भाष्ये—अपिच "ब्रह्म पुच्छं प्रतिष्ठे"त्युक्त्वेदमुच्यते—"तदप्येष श्लोको भवति। असन्नेव स भवती"ति। अत्र श्लोकेऽननुकृष्यऽऽनन्दमयं ब्रह्मण एव भावाभाववेदनयोर्गुणदोषाभिधानाद्गम्यते "ब्रह्म पुच्छमि"त्यत्र ब्रह्मण एव स्वप्रधानत्वमिति। अत्रह्य"ननुकृष्यऽऽनन्दमयं" इति भाष्येण हि पूर्वतनश्लोकेष्वन्नमयादीनामप्यनुकर्षेण तत्रोपासनविधानमिवात्रानन्दमयानुकर्षेण तत्सामानाधिकरण्येन वैयधिकरण्येन वा श्लोके निर्देशाभावान्नानन्दमयविषयत्वं श्लोकस्य भवतीति सूचितम्। विवेचितं चेदं पूर्वमेवास्माभिः। एतेन—श्लोकस्यानन्दमयविषयत्वं सिद्धवत्कृत्य एकेन ब्रह्मशब्देन पुच्छस्य ब्रह्मत्वे निगमनश्लोकस्थाभ्यां द्वाभ्यां ब्रह्मशब्दाभ्यामानन्दमयस्य सुतरां ब्रह्मतासिद्धेरि"त्यादि प्रकाशप्रसरोक्तमाशामोदकमात्रमिति—सूचितम्। विज्ञानमयश्लोके तु "विज्ञानं यज्ञं तनुते" इति विज्ञानमयानुकर्षो वर्तत इत्यानन्दमयपर्यायान्तश्लोकाद्विशेषोऽवचनसिद्ध एव। एतेन—अन्यथा विज्ञानमयं प्रत्युदाहृतश्लोकेऽपि ब्रह्मशब्दश्रवणेन ब्रह्मशब्दस्य तदभ्यासस्य वाऽप्रयोजकत्वप्राप्त्या तेन पुच्छब्रह्मतासाधनप्रयासवैयर्थ्यापत्तेः। तदुक्तं—ब्रह्मशब्दबलात्पुच्छ-

SGDF Sri Gargeshwari Digital Foundation

मेव ब्रह्मेति दुर्धियः । श्रुतिः सूत्राध्वनाऽनन्दमयं ब्रह्मर्चि शंसति । प्राक् प्रस्ताव्यानन्दमयं श्लोके तत्रोदिते श्रुतिः । द्विरुक्तब्रह्मशब्देन कथं ब्रह्म न तौ जगौ ।" इत्यादिप्रकाशप्रसरोक्तम्—अपास्तम् । अत्र भाष्ये द्वयोर्ब्रह्मत्वं प्राधान्येनैव नास्तीति वर्णितं, नतु गौणमुख्यरूपेण । तथाच सर्वस्य ब्रह्मात्मत्वमद्वैतिनां यदभिमतं तदिदं ब्रह्मव्यतिरेकेण सर्वाभावनिरूपणपरमेवेति न विरोधः ॥

एतेन—उभयोर्ब्रह्मताऽयोगादेकत्यागो यदीष्यते । सर्वस्य ब्रह्मता तर्हि केन वा घोषिता भुवि—इत्यपास्तम् । यत्तु—प्रकाशप्रसरे-किंच श्रुतावादरश्चेत् पुच्छस्य ब्रह्मताऽस्तु ते । अन्यस्याऽब्रह्मता कस्मात् स्वीकृता न हि । इत्यादिना तात्पर्यानुसारेणान्येषामपि ब्रह्मत्वमङ्गीकरणीयमेवेति वर्णितम्, तदिदं अन्नमयोऽभ्यासादित्यसूत्रणेन "आनन्दमयोऽभ्यासादि"ति सूत्रणेन चाननुकृष्यानन्दमयमनुकृष्य च ब्रह्मशब्दमभ्यासस्यैव हेतुताया विवक्षितत्वेन तस्य च न्यायस्यान्नमयानन्दमयान्तासाधारण्यादनवसरमेव ॥

"ब्रह्म पुच्छमभ्यासादि"ति सूत्रयितव्ये "आनन्दमयोऽभ्यासादि"ति सूत्रणे निमित्तं तु—आनन्दमयो न ब्रह्मेत्येकदेशमतनिरासः "तद्धेतुव्यपदेशाच्चे"त्यत्रानन्दमयपरामर्शसिद्धिश्चेति न्यायरक्षामणौ व्यक्तम् । अधिकमत्र वक्तव्यमस्माभिरस्मदीयब्रह्मसूत्रभाष्यभूमिकायामुक्तम् ॥

वस्तुतस्तु—"असन्नेव स भवति । असद् ब्रह्मेति वेद चेदि"त्यत्रानन्दमयस्य ब्रह्मशब्देन ग्रहणमेव न संभवति, सगुणस्य तस्य शास्त्रप्रतिपाद्यस्य शास्त्रत एव प्रसिद्ध्याऽसत्त्वशंकाया अनुपपत्तेः ।

SGDF
Sri Gangeshwaranand Digital Foundation

अस्मन्मते तु "नेति नेती"ति निषेधमुखेनोपदिश्यमानस्याऽऽसाक्षात्कारमसत्त्वशंका हि सुतरां संभवतीति मननिदिध्यासनात्पूर्वं तदसत्त्वशंका न कर्तव्या, किन्तु मननादिभिः तत्साक्षात्कारः संपादनीय इति बोधनेन सर्वमुपपद्यते। अत एव—"तत्त्वेव भयं विदुषोऽमन्वानस्ये"त्युत्तरवाक्यमुपपद्यते। इदं आनन्दमयब्रह्मतापक्षेणापि न श्लोके तस्य ग्रहणमिति निरूपणार्थं संपादितम्॥

एतेन—आनन्दमयस्योक्तरीत्या प्रियाद्यवयवयुक्तस्य ब्रह्मतायाः साधितत्वात् त्वदभिमतकोशपरत्वेऽपि तस्य कोशचतुष्टयान्तःस्थितस्याप्रत्यक्षत्वात् न तत्र लोकप्रसिद्धिः। शास्त्रप्रसिद्धिस्तु ब्रह्मण्यपि समानैवेति प्रकाशप्रसरोक्तम्—परास्तम्। अस्मदीयब्रह्मणःश्रुतमात्रेण प्रसिद्ध्यभावपक्षस्यैवोक्तोपनिषदभिप्रायत्वात्। "अन्योऽन्तर आत्मे"त्युपदेशो हि पूर्वपूर्वनिरासेन "नेति नेती"ति श्रुत्यन्तरप्रसिद्धोपदेशरीतिमेवानुसरतीति सगुणब्रह्मविषयिण्येव शास्त्रतः प्रसिद्धिरप्यत्र विवक्षणीया। एवंचा"सन्नेव स भवती"ति वाक्येऽनुभवेन शास्त्रतो वा प्रसिद्धस्यासत्त्वशंका कथमपि न भवति। अस्मदभिमतानन्दमयकोशोऽपि सुषुप्तौ यत्र शरीरप्राणमनोबुध्यादीनां सूक्ष्मावस्थया त्वस्थानं तदा सुखीति प्रत्ययाभावादात्माऽविद्योपहितः प्रत्यक्ष एवेति सर्वलोकप्रसिद्धत्वमविवादमेव। नहि वयमत्र प्रत्यक्षं बाह्यं मानसं वा वदामः, किन्त्वाविद्यकवृत्तिरूपम्। व्यक्तं चतत् व्यायरत्नावल्याम्। अधिकं चाहमर्थानात्मतावादेऽद्वैतसिद्ध्यादिषु विस्तृतमिति तत एवाऽवगन्तव्यम्।

SGDF
Sri Gangeshwari Digital Foundation

तदिदमभिप्रेत्योक्तं भाष्ये—नचाऽऽनन्दमयस्य भावाभावशंका-प्रियादिविशिष्टस्य सर्वलोकप्रसिद्धत्वात् इति ॥

अत्र "विशिष्टस्य" "प्रसिद्धत्वादि"ति च प्रयोगेण सगुणब्रह्म-पक्षनिरासोऽपि सूचित एव। नह्यत्र सर्वलोकप्रत्यक्षत्वादित्यु-क्तम्। तथाचानन्दमयान्तकोशाध्ययनानन्तरं श्रुतवेदान्तमात्राणा-मपि सगुणप्रसिद्धिः संभवत्येव, नतु तथा निर्गुणप्रसिद्धिर्विना मननादिकमिति सूचितम्। अत्रच सर्वलोकपदेनाधीतानन्दमया-न्तानामेव ग्रहणं परमात्मनिरासपक्षे, मतान्तरेतु पामरादिसाधार-ण्येनापीति न दोषः। सर्वथा च "असन्नेव स भवती"ति श्लोके नानन्दमयविवक्षा संभवतीति "ब्रह्म पुच्छमि"ति वाक्यमेव ब्रह्म-समर्पकमिति सिद्धम् ॥

इतः परमिदं विचारणीयं यत् ब्रह्मणः पुच्छपदेनाधारत्वं य-द्विवक्षितं तत् किंरूपमिति। अधिष्ठानत्वरूपमेवेति वदामः। यत्तु—आधारत्वस्याधिष्ठानरूपतया वक्तव्यतया तस्यावयवान्तर-साधारण्येनान्यत्राप्येवमुक्तिप्रसङ्गात् लौकिकानन्दं प्रति ब्रह्मान-न्दस्याधारत्वासंभवाच्चेति प्रकाशप्रसर उक्तम्, तत्र पूर्वतनपर्याये-ष्वपि ब्रह्म पुच्छं प्रतिष्ठेति निर्देशापादनं हि तदैवोपपद्यते, यदि नि-र्विशेषमखण्डं तत्तत्पर्यायेष्वपि ज्ञेयतया विवक्षितं श्रुत्या। नचैत-दस्तीति त्वन्तिमपर्यायमात्रे तथा निर्देश आदृतः। तथाचान्तिम-पर्यायमात्र उक्तनिर्देशान्यथानुपपत्त्यैवान्नमयादिब्रह्मतापक्षो नात्र विवक्षित इति गम्यते। "एतस्यैवानन्दस्यान्यानि भूतानि मा-त्रामुपजीवन्ती"ति ब्रह्मानन्दांशमात्रत्वात् लौकिकानन्दानां लौ-

SGDF
Sri Gangeshwar Digital Foundation

किकानन्दस्य ब्रह्मानन्दोऽधिष्ठानमित्यपि कल्पनं हि नास्मत्सं-प्रदायविरुद्धमिति न पुच्छवाक्येन निर्विशेषबोधानुपपत्तिः ॥

निर्विशेषब्रह्मस्वरूपमेवात्र प्रतिपिपादयिषितमिति– " यतो वाचो निवर्तन्ते " इति वाक्यशेषेणावगम्यते । तथाचानन्दमय-ब्रह्मताऽविवक्षण इदमप्येकं बीजं यत् तस्य सविशेषस्य यतो वाच इति वाक्यशेषान्वयो न संभवति । तदुक्तं भाष्ये—अपिचा-नन्दमयस्य ब्रह्मत्वे प्रियाद्यवयववत्त्वेन सविशेषं ब्रह्माभ्युपेयम् । निर्विशेषं च वाक्यशेषे श्रूयते; वाङ्मनसागोचरत्वाभिधानात्" इति । यत्तु प्रकाशप्रसरे—त्वन्मते "कामाच्च नानुमानापेक्षे"ति सूत्रे कामादिगुणविशिष्टपरताया व्याख्यातत्वेन सविशेषत्वस्या-वर्जनीयत्वात् इत्युक्तम् । तदिदमस्माभिस्सृष्टिवाक्येषु सर्वत्रोप-हितस्वरूपचैतन्यमेव विवक्ष्यत इति पूर्वमेवोक्तत्वादनवसरमेव । यत्तुप्रकाशप्रसरे त्वदभिमतशून्यस्थानीयनिर्विशेषपरत्वायोगादिति वर्णितम्, तदिदमस्मदीयस्य निर्विशेषस्यासत्त्वादिशंकायोग्यता-दिकं वाङ्मनसागोचरत्वं चैव गमयतीत्यस्माकमेवानुकूलम् । नह्यनन्तकल्याणगुणविशिष्टसविशेषस्वरूपं वेदान्तश्रवणानन्तरमपि न ज्ञातुमलमिति न "यतो वे"ति वाक्यस्य सविशेषपरत्वं युक्तम्, अर्थवादत्वप्रसङ्गादिति सविशेषस्यानन्दमयस्य न प्राधान्यम् ॥

अत एव तत्र मयट्प्रत्ययप्रयोगोऽप्युपपद्यते । तत्र प्रायपाठेन मयटो विकारार्थत्वमेव युक्तम्, न प्राचुर्यार्थत्वम् । प्रचुर्यार्थत्वेऽपि प्रायपाठानुग्रहार्थं प्राचुर्यमत्र स्वसमानाधिकरणविजातीयाल्पता-निरूप्यमेवोरीकर्तव्यम् । अतएव प्राचुर्यविशेष्यत्वमत्रोपपद्यते ।

SGDF
Sri Gangeshwari Digital Foundation

आथर्वणे तु गत्यन्तराभावात् स्वार्थ एव मयडङ्गीक्रियते, प्राचुर्यस्य स्वव्यधिकरणविजायाल्पतानिरूप्यत्वं वोरीक्रियते। नहि तत्र विज्ञानमयातिरिक्तब्रह्मनिरूपणमुपलभ्यते। एतेन—प्राचुर्यस्य स्वव्यधिकरणविजातीयाल्पतानिरूप्यतयोपपन्नत्वात्, त्वन्मतेऽपि आथर्वणे विज्ञानमयादिशब्देन ब्रह्मबोधनादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। अभ्यासादिनाऽऽनन्दमयब्रह्मत्वनिर्णयानन्तरं खलु नियमसंकोचेनात्र प्राचुर्योपपत्तिर्निर्णनीया, नतु प्राचुर्यमात्रेण। अभ्यासादिना तु पुच्छब्रह्मण एव प्राधान्यं निर्धारितमिति प्राचुर्यमत्र मुख्यमेवादरणीयम्। आनन्दमीमांसायां "स एको ब्रह्मण आनन्द" इत्यन्तेन स्वसमानाधिकरणविजातीयाल्पतानिरूपकत्वमेव हि प्राचुर्यस्य स्पष्टमेव निरूपितं भवतीति तदुपपत्त्यर्थमप्यत्र प्राचुर्यं न ब्रह्मस्वरूपविवक्षाप्रतिबंधकमित्यूरीकर्तव्यम्। यथाच ब्रह्मपदाभ्यासो नान्दमयब्रह्मतासाधको भवति, तथा पूर्वमेव विवेचितम्। तथाच यद्यानन्दमयस्य ब्रह्मता भवद्भिरुरीकर्तव्या, तर्हि आनन्दमयाभ्यासेनैव सा संपादनीयेत्यानन्दमयपदाभ्यासाभावात् नानन्दमयब्रह्मतावादः संभवति। तदुक्तं भाष्ये—"नचानन्दमयाभ्यासः श्रूयते" इति ॥

यत्तु प्रकाशप्रसरे—आनन्दमयाभ्यासो न श्रूयते इत्येतावता का नो हानिरिति पृष्टम्, तत्रेदमेवोत्तरम्—यत् भावतामानन्दमयब्रह्मतावादलेशस्याप्यनवसर इति। यस्तु आनन्दपदाभ्यासो "रसो वैस" इत्यादौ विद्यते,स "विज्ञानमानन्दं ब्रह्मे"ति श्रुत्यन्तरे केवलानन्दपदस्य निर्विशेषब्रह्मविषयत्वस्यैवावगमात् पुच्छ-



SGDF
Sri Gargeshwari Digital Founda

ब्रह्मवादस्यैवानुकूलः। तदुक्तं भाष्ये—श्रुत्यन्तरे—"विज्ञानमानन्दं ब्रह्मे"ति प्रयोगदर्शनात् "यदेष आकाश आनन्द" इति ब्रह्मविषयः नानन्दमयाभ्यास इत्यवगन्तव्यमिति॥

यत्तु प्रकाशप्रसरे—आनन्दस्य ब्रह्मत्वे परिपूर्णनन्दस्य ब्रह्मतायाः स्वतःसिद्धत्वादित्युक्तम्? तदिदं आनन्दरूपत्वस्यानन्दवैशिष्ट्यस्य च प्रयोज्यप्रयोजकभावाभावादप्रयोजकम्। यत्तु-पुनः "यदेष आकाश आनन्दो न स्यादि"त्यानन्दमयस्य विष्णोः पूर्णानन्दत्वे लोकचेष्टकत्वाख्यहेतुसमर्पकतायाः समर्थितत्वेन त्वदभिमतनिर्विशेषब्रह्मपरत्वायोगात्—इत्युक्तम्, तत्रेदमेव वक्तव्यम्—यत् "सो कामयते"तिसृष्ट्युपक्रमेण प्रवृत्तेऽस्मिन् "सन्दर्भे" "तदनुप्रविश्ये" ति श्रुत्यन्तरोक्तार्थ एव संगृह्यत इति जगच्चेष्टासमर्पकत्ववर्णनेनानुपपन्नम्॥

अयं भावः—निर्विशेषमेवाविद्यासहितं सदधिष्ठनम्। तत्रानंन्दत्वात्मनाऽज्ञानेऽपि कारणस्य वस्तुगत्याऽऽनन्दत्वं वर्तत एव। तथाच "यदेष आकाश" इति वाक्य आनन्दत्वेनोज्ञातस्वरूपचैतन्यमेव विवक्ष्यत इति न काऽपि हानिः॥

"आनन्दमयमात्मानमुपसंक्रामती"त्यादावपि मयड्श्रवणेन न परमात्मनो ग्रहणमिति पूर्वमेव विवेचितप्रायम्। यदत्रोपसंक्रमणीयत्वमुक्तं तदिदं न ज्ञेयब्रह्मलिङ्गमित्यपि पूर्वमेव विवेचितम्। विदुषो ब्रह्मप्राप्तिरूपफलनिर्देशस्तु श्रुत्या यद्यपि न कृतः; अवाङ्मनसगोचरत्वात्। एवमपि—आनन्दमयान्तोपसंक्रमणेन शरीरपाताद्यनन्तरं स्वत एव भावी स इति न क्षोभः। तदुक्तं भाष्ये-

SGDF Sri Gangeshwari Digital Foundation

आनन्दमयोपसंक्रमणनिर्देशेनैव विदुषः पुच्छब्रह्मप्राप्तेः फलस्य निर्दिष्टत्वादिति । अत्र हि भाष्ये आनन्दमयोपक्रमणवाक्य एव पुच्छप्राप्तिरपि बोध्यत इत्यर्थो न विवक्ष्यते, किन्तु पूर्वोक्त एवाशयः ॥

एतेन—"आनन्दमयमुपसंक्रम्ये"त्यनेन पुच्छप्राप्तेरबोधनात् तत्र पुच्छपदाभावात् , लक्षणादिकल्पने बीजाभावात् "इत्यादि प्रकाशप्रसरोक्तमनुक्तोपालभंनमेवेति—सूचितम् । "सोऽकामयते" त्यत्र पुल्लिङ्गेन पुच्छब्रह्मपरामर्शोपपत्तिस्तु पूर्वमेव विवेचिता ॥ "तस्यैष एव शारीर आत्मा । यः पूर्वस्ये" "त्यसन्नेवे"ति श्लोके ब्रह्मण एव आत्मेति परामर्शेनात्मशब्दो न व्यवहितः, "सोऽकामयते"त्यस्य, किन्त्वानन्दमय एव व्यवहितः । एतेन—सन्निहितानन्दमयपरामर्शे संभवति बहुदूरस्थात्मपरामर्शासंभवात् , त्वदीये ब्रह्मणि कामनाद्ययोगाच्च,उपहितब्रह्मविवक्षणे निर्विशेषत्वव्याघाताच्चे"त्यादि प्रकाशप्रसरोक्तमपास्तम् ॥

अत्रेदं तत्त्वम्—ब्रह्मवल्ल्यां हि ज्ञेयं ब्रह्म प्रथमतो नपुंसकत्वेन निर्दिश्य कारणत्वेन तन्निर्देश आत्मभावग्रहणेन पुंलिङ्गेनैव क्रियत इति "तस्माद्वा एतस्मादि"त्याद्युपक्रमत एवेयं शैली दृष्टेत्युपक्रान्तनपुंसकब्रह्मनिर्देशः "ब्रह्म पुच्छं प्रतिष्ठे"त्यत्रैव मूलवाक्ये वर्तत इति तत्रैव ज्ञेयब्रह्मसमर्पणम् । समर्पिते च ज्ञेये ब्रह्मणि प्राप्यब्रह्मस्वरूपनिरूपणमात्मभावमादायैवेति "सोऽकामयते"ति पुंलिङ्गनिर्देश इति ॥

अयं भावः—"सोऽकामयते"ति वाक्यं हि—"अथातोऽनुप्रश्नाः"

SGDF
Sri Gurgishankar Digital Founda

इत्यनन्तरं प्रवृत्त इति अथातः शब्दाभ्यां ज्ञेयब्रह्मप्रकरणविच्छेदावगमात् परपदार्थविवरणमेवेदं वक्तव्यम् । परपदं च पुंलिङ्गं वा नपुंसकं वेति संशये—"तस्माद्वा एतस्मादात्मन" इत्यात्मशब्देन "ब्रह्मणा विपश्चिते"त्युपक्षिप्तविपश्चित्समानार्थकेन विवृतमिति पर्यालोचनायां पुंलिङ्गमित्येव व्यवतिष्ठते । तथाच परपदेनाज्ञातानन्दस्वरूपं विवक्ष्यते । अज्ञातानन्दस्वरूपप्राप्तिश्च तज्ज्ञानमेवेति सर्वोपपन्नम् । अत एव "रसो वै स" इत्यादिनाऽऽनन्दत्वमात्रोपदेश उपपद्यते । अज्ञातानन्दस्वरूपं च ब्रह्मानन्दात्मरसादिशब्दैरेव निर्देष्टुं योग्य इति "सोऽकामयते"त्यादिकमद्वैतिनामत्यन्तमनुकूलमेव । न हि तस्माद्वाक्ये निर्विशेषविवक्षामद्वैतिनोऽपेक्षन्ते । तथाचानन्दत्वेन ब्रह्मज्ञानमेव मोक्षसाधनमिति "आनन्दो ब्रह्मेति व्यजानादि" तिवाक्य आनन्दपदेन ब्रह्मविवक्षा नानुपपन्ना । तदुक्तं भाष्ये—यातु भार्गवी वारुणी विद्या, तस्यां मयडन्ताश्रवणादानन्दस्य ब्रह्मत्वमिति ॥

अयमाशयः—ब्रह्मवल्ल्यां गुहास्वरूपं तदतिरेकेणैतन्निहितात्मस्वरूपमुपदिष्टम् । अत्र तु शरीरादिकारणान्नादिमुखेन तदुपदिश्यत इत्यानन्दमयकारणस्वरूपानन्दस्यैवा"ऽनन्दो ब्रह्मेति व्यजानादि"त्यत्र ग्रहणमिति सिद्धम् । अत्रानन्दो ब्रह्मेति व्यजानादित्यत्र निर्दिष्टस्य निर्विशेषस्यैवोपाधिसम्बंधात् कारणत्वमपि कल्पितं रूपमिति प्रदर्शनार्थमानन्दशब्देव खल्विति वाक्यं प्रवृत्तम् । तथाचानन्दात्मनैवावृतेन ब्रह्मणः कारणत्वमिति कारणस्वरूपमनुद्यानन्दत्वविधानमपि तत्र तत्रोपपन्नमेव । सर्वथा तु आनन्दस्य

SGDF Sri Gangeshwari Digital Library

पुंस्त्वात् "सोऽकामयते" त्यादौ पुलिङ्गनिर्देश उपपन्न एवेति पुच्छब्रह्मवाद एवौपनिषदः ॥

तदयमुपनिषदर्थ एव सूत्रकाराणामपि संमत इति मन्वाना भाष्यकारा एवं वदन्ति—यत् "सूत्राणि त्वेवं व्याख्येयानि । ब्रह्म पुच्छं प्रतिष्ठेति स्वप्रधानमेव ब्रह्मोपदिश्यते, अभ्यासात्, "असन्नेव स भवती"ति श्लोके ब्रह्मण एव केवलस्याभ्यस्यमानत्वादि" ति । भामत्यामप्ययमेवार्थः—"ब्रह्मपुच्छं प्रतिष्ठेति ब्रह्मशब्दात् प्रतीयते । विशुद्धं ब्रह्म, विकृतं त्वानन्दमयशब्दतः" इत्यादिना-स्पष्टीकृतः ॥

अत्रेदं विचारणीयम्—"आनन्दमयोऽभ्यासादि"ति सूत्रयता-माचार्याणामानन्दमयपदेन किं तत्पर्यायः सर्वोऽपि विवक्षितः, उत तत्पदमात्रं वा, आद्ये सूत्रघटकानन्दमयस्य तद्वाक्यलक्षकत्वमुभयवादिसंमतम् । तथाचानन्दमयवाक्यपर्यायस्य ब्रह्मशब्दाभ्यासवत्त्वेन ब्रह्मसमर्पकत्वव्यवस्थापनमेवात्र विवक्षितमिति किमवच्छेदेन तत्समर्पणमिति विनिर्णयोऽत्र हेतुबलेनैव कर्तव्य इति ब्रह्मशब्दाभ्यासहेतोरेवोभयवादिसंमतत्वात् तस्य च ब्रह्मशब्दघटितांशावच्छेदेन तत्समर्पकत्वमेव स्वरसम् , नत्वानन्दमयवाक्येन । नहि तत्र पर्यवसितो वाक्यार्थः ; "तस्य प्रियमेव शिर"इत्यादिना साकांक्षत्वात् । ब्रह्म पुच्छमित्यनेन तु निराकांक्षवाक्यार्थो भवतीति तेनैव ब्रह्मसमर्पणं युक्तमुपपन्नतरं च । द्वितीयेतु ब्रह्मशब्दाभ्यासरूपहेत्वसिद्धिः । आनन्दमयपदे ब्रह्मपदाभ्यासाभावात् , अन्यशब्दाभ्यासेनान्यतात्पर्यविषयत्वनिर्णयस्य वेय-

SGDF
Sri Gurgeshwari Digital Founda

धिकरण्यं च। अस्मन्मते तु आनन्दमयपर्यायः, ब्रह्मपुच्छमित्यं-शेन प्रधानतया ब्रह्मसमर्पकः, अभ्यस्यमानब्रह्मशब्दवत्त्वद्विशि-ष्टत्वादिति वा, लाघवानुसारेण "ब्रह्म पुच्छमि"ति वाक्यम्, प्राधान्येन ब्रह्मसमर्पकम्, अभ्यस्यमानब्रह्मशब्दवत्त्वादिति वा सूत्रार्थविवक्षणान्न स्वरूपासिद्धिर्नवा वैयधिकरण्यमिति सिद्ध-मिति प्रथम एव पक्षः स्वीक्रियते॥

ब्रह्मसूत्राणि न्यायरूपाणि हेत्वंशस्वारस्येनैव व्याख्येयानि, न पक्षांशस्वारस्येन। अन्यथा भवतामुक्तन्यायमात्रपर्यालोचनेन कथं वाऽऽनन्दमयपदमन्नमयादीनामुपलक्षणमिति सिद्धान्त उप-पद्येत? हेत्वंशस्वारस्यं च पुच्छब्रह्मविषयत्व एव वर्तत इति आन-न्दमयपदं पुच्छवाक्यपरमित्येव सूत्रकाराशयः। न हि ब्रह्मशब्द-स्य ब्रह्मपरत्वमिवानन्दमयपरत्वमपि निर्णीतम्।

एतेन—अन्नमयात्मतावादोऽपि—परास्तः; नह्यन्नमयादिवा-क्यं तत्पदं वाऽऽभ्यस्यमानब्रह्मशब्दवत् वर्तते। नहि ब्रह्म-शब्दाम्नानमात्रमभ्यासपदार्थः। अन्यथा "मनो ब्रह्मेत्युपासीते" त्यादावपि मनआदिपदस्यापि ब्रह्मपरत्वापत्त्या "ब्रह्मदृष्टिरुत्कर्षा-दि"त्यधिकरणासङ्गत्यमापतति। तथाच "सूत्राणि त्वेवं व्याख्ये यानी"ति वदतामाचार्याणामयमाशयः—यत् सूत्रे पक्षनिर्देशकप-दस्योपलक्षणत्वात् हेत्वंशस्यैव विवक्षितत्वात् यत्र सन्देहस्तदंशस्यै-व तत्र विवक्षितत्वात् आनन्दमयपदे च प्रियाद्यवयविशिष्टे ऽब्रह्म-त्वनिर्णयेन पुच्छवाक्य एव पुच्छनिर्देशब्रह्मशब्दाभ्यां सन्देहेन तदुपलक्षणत्वमेवानन्दमयपदस्येति। अन्यथा सर्वेषां यदि ब्रह्मत्व-

SGDF
Sri Gargeshwari Digital Found

मभिमतं तर्हि "ब्रह्म पुच्छं प्रतिष्ठे"त्ये"व सर्वत्रापि पर्यायेषु निर्देशः स्यात्, नचैतदस्ति ॥

एतेन—वेदसूत्रयोर्विरोधे "गुणे त्वन्याय्यकल्पने"ति न्यायेन सूत्राण्यन्यथा नेयानीति भामत्यपि—व्याख्याता। तदुक्तं परिमले यत्र ब्रह्मत्वं साध्यं तत्र तद्विषयश्रुत्यादिमात्रं हेतूकर्तव्यम्, इह तु ब्रह्मणः पुच्छवाक्यविषयत्वे स्थित एव तात्पर्येण तत्प्रतिपाद्यत्वं साध्यमिति सिद्धये तल्लिङ्गतयाऽभ्यासरूपहेतूक्तिरि"ति। अनेनेदं स्पष्टमेवावगम्यते-यत्सौत्रानन्दमयपदमात्रस्य तत्पर्यायगतपुच्छवाक्योपलक्षणत्वमेव सौत्रहेतूपपत्त्यर्थमेव क्रियत इति। नहि वयं सूत्रघटकानां सर्वेषामपि पदानामन्यथानयनं ब्रूमः, किन्तु धर्मिपदमात्रस्य, यत्र सूत्रकाराणां न तात्पर्यमिति वेदार्थनिर्णायकत्वेन व्याख्यानरूपत्वेन सूत्रप्राबल्यमपि नास्माकं विरुद्धम्। सूत्रनिर्दिष्टो हि तात्पर्यविषयो हेतुरस्माकमेव स्वरस इति पूर्वमेव विवेचितम्। तथाच वैदिकवाक्यं संदिग्धमेव सूत्रकारैर्निर्दिश्यहेतुनिर्देशः क्रियत इति धर्मिनिर्देशांशे सूत्राणां व्याख्यानरूपत्वाभावेन गौणत्वमवचनसिद्धमेव ॥

एतेन—सूत्राणां श्रुत्यर्थनिर्णायकतयोपकारकत्वेन निर्णयश्रुतेर्निर्णायकसूत्रानुसारेणैव योजनीयत्वेन निर्णयश्रुत्यनुसारेण सूत्रस्यान्यार्थवर्णनस्यायुक्ततया असकृदावेदितत्वादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। नहि श्रुत्यनुसारेण सूत्रतात्पर्यविषयस्य हेतोरन्यथानयनं कुर्मः, किन्तु तादृशसौत्रहेतुनिर्देशानुसारेण निर्णयश्रुतिस्वरूपमेवान्यथा मन्महे; आनन्दमयपदमात्र-

SGDF
Sri Gangeshwari Digital Foundation

स्यैव लक्षणाङ्गीकारात् । तदुक्तं परिमले—तत्र सौत्रानन्दमयशब्दस्यानन्दमयपर्यायाम्नाते पुच्छब्रह्मणि लक्षणे"ति । तथाच पुच्छपदप्रतीताप्रधान्यनिरासार्थमेवेदमधिकरणमित्यानन्दमयब्रह्मतावादो न युक्तः । अभ्यासरूपेण हेतुनाऽपि पुच्छत्वमात्राविवक्षैव गम्यते । मतान्तरे तु त्रिविधपरिच्छेदराहित्यादिना निर्गुणपरतया पूर्वाधिकारे प्रसाधितस्य ब्रह्मशब्दस्यापि मुख्यार्थबाधेऽभ्यासस्य तात्पर्यमूरीकरणीयम् । नह्येकबाधकत्वेनोपपत्तावनेकबाधककल्पनं युक्तम् । तदुक्तं परिमले—"ब्रह्मशब्दोऽपि ज्ञेये परब्रह्मणीवपास्ये सविशेषे केनचिद्रूपेण परिच्छिन्ने ब्रह्मण्यवयवार्थपौष्कल्याभावान्नात्यन्तमुख्यभावमश्नुते" इति ॥

यत्तु प्रकाशप्रसरे—ब्रह्मशब्दस्य पुच्छे गौणत्वं कुत इत्युक्ते आनन्दमयतत्पुच्छयोर्द्वयोर्ब्रह्मत्वायोग इति वक्तव्यम् । तस्य कोऽर्थः ? किमवयविनः पूर्णत्वेऽवयवस्य पूर्णत्वायोग इति, उतावयवावयविनोर्भेदादवयविनो ब्रह्मत्वेऽवयवस्य ब्रह्मत्वायोग इति । नाद्यः, आनन्दमयतदवयवयोर्द्वयोरपि पूर्णत्वेन ब्रह्मशब्दमुख्यार्थत्वादित्याद्युक्तम्, तत्सर्वमनुक्तोपालंभनमेव । अस्तु वा कथमप्युक्ताशय एवात्र विवक्षित इति, एवमप्येकस्यैवावयवावयवविभावादिकं पूर्वमेव खण्डितमिति न दोषः । एतेन—ब्रह्मशब्दस्याऽऽनन्दमये तत्पुच्छे च मुख्यत्वान्न गौणार्थतेति सिद्धमिति प्रकाशप्रसरोक्तम्—अपास्तम् ।

न केवलं मतान्तरे—ब्रह्मपदमुख्यार्थत्वत्यागः, किन्तु मयण्मुख्यार्थत्यागोऽप्यपरो दोषोऽपरिहरणीयः । अत्र हि प्राचुर्यं परि-

SGDF
Sri Gargeshwari Digital Foundation

माणकृतं महत्स्वरूपमिति विवक्षितमुताहो संख्याधिक्यमित्याशंक्य हि परिमले यदुक्तम्—"ब्रह्मस्वरूपानन्दे संख्याधिक्यरूपस्य मुख्यस्य प्राचुर्यस्याभावात् । नहि सांख्याधिक्यवत् परिमाणाधिक्यमुत्कर्षो वा प्रचुरशब्दस्य मुख्याऽर्थः । अयं परोऽस्मात् परः प्रचुर इति वाऽयंगकारोऽस्माद्गकारात् प्रचुर इति वा प्रयोगाभावादि"ति, तत्पर्यालोचनेन हि स्पष्टमिदमवगम्यते यदानन्दमीमांसया ब्रह्मानन्दपर्यन्तस्य वाङ्मनसापरिच्छेद्यस्य संख्याकृतमाधिक्यमादायैवानन्दमयपदप्रयोग इति । अतएव "ते ये शतमि"ति शतपदप्रयोग उपपद्यते । "यतो वाच" इति वाक्येन तु संख्यानियमनादिकं यत् ब्रह्मानन्दे न संभवतीति वर्णितं तेनेदमवगम्यते यदानन्दमयशब्देन ब्रह्मविवक्षा न संभवतीति ॥

एतेन—प्रकृते "सैषानन्दस्य" ति श्रुत्यैव व्यधिकरणसजातीयस्य जीवानन्दस्याल्पत्वं शतगुणितत्वादिना परिमितत्वमुक्त्वा ब्रह्मानन्दस्य वाङ्मनसापरिच्छेद्यत्वरूपं महत्त्वापरपर्यायं प्राचुर्यमुक्तमिति न मयटो मुख्यार्थत्याग इति प्रकाशप्रसरोक्तम्—अपास्तम् ॥

यत्तु भामत्यां प्रायपाठत्यागरूपोऽपरो दोषो निरूपितः, स न पंचब्रह्मवादिनमुद्दिश्य,किन्तु आनन्दमयमात्रब्रह्मतावादिनमुद्दिश्येति सर्वविदितमिदम् । तथाच तस्यापि स्वमतदोषत्वभ्रमेण प्रकाशप्रसरे—यदुक्तं प्रायपाठत्यागदोष इति, तदप्ययुक्तम्; अन्नमयादावपि प्राचुर्यार्थत्वस्य भाष्य एव व्यक्तत्वेन प्रायपाठत्यागाभावात् —इति, तदिदमनुक्तोपालंभनमेव । यथाचा"न्नं ब्रह्मे ति

SGDF
Sri Gargeshwari Digital Foundation

व्यजानादि”ति कारणमुखेन श्लोक्यत्वेन विकारार्थकत्वमेव मयटः सूचितम्, तथा पूर्वमेव निरूपितम्। एतेन—श्लोकेऽन्नमयादिषु ब्रह्मशब्दाभ्यासोऽपि नास्तीति—सूचितमित्यन्नमयसामानाधिकरण्येन ब्रह्मशब्दाम्नानमपि नास्तीति सूत्रस्वारस्यं कथमपि न मतान्तर इति सूचितम्। यथाच प्राचुर्यविवक्षायामप्यानन्दमयपदेन दुःखिन एव ग्रहणमापद्यते तथा पूर्वमेव विवेचितम्। सर्वथातु मतान्तरे मयटोऽपि मुख्यार्थतात्यागोऽपरोऽपि दोषोऽसमाधेय एव॥

किंचानन्दमयस्यैव ब्रह्मत्वे—“तस्यैष” “यदेष आकाश आनन्दो न स्यादि”त्यादावानन्दपदेन तस्यैव ग्रहणं कर्तव्यम्। नचेदं संभवति; केवलप्रातिपदिकेनान्दमयपरामर्शस्य प्राचुर्यार्थत्वपक्षेऽसंभवात्। नहि कार्यकारणयोरिव तत्तत्प्रचुरयोरप्यभेदः कुत्रापि दृष्टचरः। तथाचानन्दपदेनानन्दमयविवक्षायां लक्षणादोषोऽपरिहरणीय एव। अत्र हि “ते ये शतमि”त्यादिना मीमांस्यत्वं हिरण्यगर्भान्तजीवानन्दानामेव भवति, न तु”यदेष आकाश आनन्द”इत्यादावुपक्षिप्तब्रह्मरूपस्यानन्दस्येत्येव बोध्यते। नहि लौकिकानन्दविचारोऽत्रावसरप्राप्तः। एतेन—सैषाऽऽनन्दस्येत्यानन्दपदं न प्राचुर्यलक्षणम्, किन्त्वानन्दमात्रपरम्। अन्यथा “ते ये शतमि”ति तत्तारतम्योक्त्ययोगादिति प्रकाशप्रसरोक्तम्-अपास्तम्। प्रकृतहानाप्रकृतप्रक्रिया ह्यत्राऽऽपद्यते। एतेन—“यदेष आकाश आनन्द” इत्यपि—व्याख्यातम्॥

“सोऽकामयते”ति तच्छब्देन प्रकृतं खल्वत्रैष आनन्द इति

SGDF Sri Gargeshwari Digital Foundation

परामर्शनीयम् । आनन्दमयप्रकरणत्वात्सर्वेषां वाक्यशेषाणां भवन्मते । तथाच तत्र केवलेनान्दपदेनाऽऽनन्दमयग्रहणं तल्लक्षणां विना नोपपद्यते । नहि वयमत्र ब्रह्मण आनन्दप्राचुर्यं नावगतमिति ब्रूमः किन्तु आनन्दपदेनाऽऽनन्दमयग्रहणायोगम्, पुच्छब्रह्मण एव तद्योगं च । एतेन—"जगत्सृष्ट्यादिमहाप्रवृत्त्या महानन्दोद्रेकसिद्धेरत्रानन्दप्राचुर्यलक्षकत्वाभावादिति प्रकाशप्रसरोक्तम्—व्यपास्तम् ॥

आनन्दं ब्रह्मणो विद्वानि"त्यत्र ब्रह्मण इति षष्ठ्यां सत्यामपि ब्रह्मानन्दयोरभेद एवेति मतद्वयसमतमिदम् । तथाच तत्रापि ब्रह्मानन्दयोरेव सामानाधिकरण्यं नानन्दमयब्रह्मणोरपि नानन्दमयब्रह्मतायामानन्दं ब्रह्मण इति केवलप्रकृतिनिर्देश उपपद्यत इति तदर्थमानन्दपदस्यप्यानन्दमयपदलक्षकत्वमूरीकरणीयं भवताम् । एतेन—"आनन्दं ब्रह्मण इत्यत्रावाङ्मनसगोचरत्वेनानन्दाप्रचुर्यसिद्धेरिति प्रकाशप्रसरोक्तमप्यनुक्तोपालंभनमिति—सूचितम् । यद्यपि भवन्तो ब्रह्मपदाभ्यासमेवात्र हेतुतया मन्यन्ते, एवमपि वाक्यशेषेषु आनन्दपदेनापि तद्ग्रहणं वक्तव्यम् । तच्च न संभवतीति बोधनार्थमेवात्रानन्दपदामुख्यार्थता भवतामापततीति वयं न्यरूरुपाम, नत्वानन्दपदाभ्यासो हेतुतया विवक्षित इति । एतेन-नास्माकमद्वैत्येकदेशिभास्करादीनामिवानन्दपदाभ्यासो हेतुः किन्तु ब्रह्मशब्दाभ्यास एवेत्यादिप्रकाशप्रसरोक्तमनवसरमिति—सूचितम् । तथाचानन्दमयब्रह्मतावादे मुख्यत्रितयलंघनं भामत्यापादितमपरिहरणीयमेव । पुच्छब्रह्मवादे तु न कस्यापि दोषलेशस्याप्यवसर इति सिद्धम् ॥२॥

SGDF
Sri Gangeshwari Digital Founda

[३] स्पष्टब्रह्मलिङ्गत्वादिनिष्कर्षः ॥

इतः परंतु अस्मन्मते प्रथमपादस्य स्पष्टब्रह्मलिङ्गवाक्यविचारत्वे चन्द्रिकोक्तानां दूषणाभासानां नावसर इति निरूपणमत्रावसरप्राप्तमिति तत्र किंचिद्विलिखामः। तत्र चन्द्रिकायामेव निरूपितम्—वाक्यान्तरे ब्रह्मधर्मतया निर्णीतत्वं जीवादावनुपपद्यमानत्वं वा स्पष्टत्वमत्र लिङ्गस्य विवक्षणीयम्। तच्च "सर्वत्र प्रसिद्धोपदेशादित्य"धिकरणविषयवाक्येऽपि जीवेऽयुक्तस्य सार्वात्म्यस्य, "अत्ता चराचराद्दि"त्यत्र पुण्यपापराहित्यादेः, "अन्तर"इत्यत्रामृतत्वादेः; "अन्तर्यामी"त्यत्रामृतत्वादेः, "अद्दश्यत्वादिगुणक"-इत्यत्र सार्वज्ञादेर्ब्रह्मलिंगस्य स्पष्टत्वात् न युक्तम्। एवं तृतीयेऽपि द्युभ्वादीत्यत्रामृतसेतुत्वसार्वज्ञादेः, 'भूमे"त्यत्राद्वितीयत्वादेः, 'अक्षरमम्बरे"त्यत्राद्दश्यत्वादेः, "ईक्षतिकर्मे"त्यत्र परात्परत्वादेर्ब्रह्मलिंगस्य स्पष्टत्वं वर्तत इति ॥

अत्रैवमद्वैतिनो मन्यन्ते—निर्णयतात्पर्यकवाक्योपक्रमगत—जीवोपस्थित्यद्वारकब्रह्मोपस्थितिप्रयोजकब्रह्मलिंगासमभिव्याहृत —ब्रह्मोपस्थित्यद्वारकजीवोपस्थितिप्रयोजकजीवलिङ्गानभिभूतत्वं स्पष्टत्वं ब्रह्मलिङ्गस्य विवक्षितम्। वर्तते चेदं लक्षणं आनन्दमयविषयादिवाक्येषु, यत्र हि निर्णयतात्पर्यवाक्यं ब्रह्मपुच्छं प्रतिष्ठे"ति। नचात्रोपक्रमे किमपि जीवलिंगं वर्तते ॥

एतेन — आकाशप्राणज्योतिःप्राणाधिकरणविषयवाक्यान्यपि—व्याख्यातानि। "अन्तस्तद्धर्मोपदेशादि"त्यत्र तु हिरण्यश्मश्रुत्वादीनामुभयसाधारण्येन जीवलिंगं न ब्रह्मोपस्थित्यद्वारकजी-

SGDF
Sri Gargeshwari Digital Forum

वोपस्थितिप्रयोजकमिति सर्वत्र लक्षणसमन्वयः। एतेन—आदित्यस्थत्वसाधकलिङ्गस्य जीवेश्वरोभयसाधारणधर्मसमभिव्याहृतत्वेन आदित्यस्थो जीवो वेश्वरो वेत्येव पूर्वपक्षः स्यात्,नतु जीव एवेत्येकतरकोटिनिर्णयरूप इति प्रकाशप्रसरोक्तम्—अपास्तम्॥

यथाहि भवतामुभयत्र प्रसिद्धपादे रुद्र एवेत्यादिपूर्वपक्षः,एवमस्माकमपि वक्तुं शक्यमेव। "सर्वत्र प्रसिद्धोपदेशादि"त्यत्र तु "सर्वं खल्विदं ब्रह्मे" ति वाक्यस्य निर्णीततात्पर्यकत्वेनानिर्णयतात्पर्यकत्वात्। अन्यस्य ब्रह्मलिङ्गस्योपक्रमेऽभावेऽपि संभाव्यमानस्वारस्येन मनोमयत्वलिङ्गेन सार्वात्म्यस्य ब्रह्मलिङ्गस्याभिभूतत्वान्नातिव्याप्तिः॥

एतेन—मनःप्रधानत्वरूपस्य वा मनोनियात्मकत्वरूपस्य वा मनोमयत्वस्येश्वरसाधारण्यान्न तस्य जीवमात्रधर्मत्वमिति प्रकाशप्रसरोक्तम्—अपास्तम। एतेन—"अथ य एषोऽन्तरक्षिणी" ति वाक्यमपि-व्याख्यातम्। दृश्यमानत्वं हि प्रतिबिंब एव स्वरसम्। नचात्राप्युपक्रमे किमपि ब्रह्मलिङ्गं वर्तत इति तदभिभूतत्वादमृतत्वादेः। "अत्ता चराचरग्रहणादि"त्यत्र पुण्यपापराहित्यं न निर्णेयवाक्यगतम्। "अन्यत्र धर्मादि"त्यादेर्निर्णीततात्पर्यकत्वादिति न दोषः

एतेनान्तर्याम्यधिकरणविषयवाक्यमपि व्याख्यातम्। तत्रापि प्रथमश्रुतनियमनस्वारस्यसिद्धसशरीरत्वद्रष्टृत्वादिजीवलिङ्गं तद्वाक्योपक्रमे ब्रह्मलिङ्गाभावात् ब्रह्माभिभिभावकमेव॥

"अदृश्यत्वादिगुणको धर्मोक्तेरि"त्यत्र तु "यः सर्वज्ञ" इत्यादे

SGDF
Sri Gargeshwari Digital Foundation

"रक्षरात् परतः पर" इति श्रुतपरविषयकत्वाङ्गीकारादक्षरा-विषयत्वात् "यथोर्णनाभिसृजते गृह्णते चे"त्यचेतनदृष्टान्तोप-बृंहितत्वेनाद्रष्टृत्वादि प्रधान एव स्वरसमिति न स्पष्टब्रह्मलिङ्ग-त्वम् ॥

"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं सह प्राणैश्च सर्वैरि"ति द्युभ्वाद्यधिकरणविषयवाक्ये यच्छब्दबलेनानुमानगम्यत्वं लिङ्गे यदवगतं तदिदमुपक्रमे सर्वज्ञत्वं नास्तीति कृत्वा प्रबलतया स्वी-कृतमिति लक्षणसमन्वयः। तदुक्तं भाष्ये—"अदृश्यत्वादिगुणको धर्मोक्तेरि"त्यनेन सिद्धमपि प्रपञ्चार्थमिदमधिकरणमिति ॥

"भूमा"संप्रसादादधि"त्यत्र तु"यत्र नान्यत् पश्यति नान्यद्विजना-ती"ति श्रुतमद्वितीयत्वं नोपक्रमगतमिति तस्य प्राणात् भूयसोऽ प्रतिपादनरूपस्य प्राणश्रुत्याद्युपबृंहितस्य ब्रह्मलिङ्गस्य प्राबल्या-न्न दोषः ॥

एतेन—"स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवादयन्ती" त्यपि—व्याख्यातम्। तत्रहि पूर्वपक्षे आकाशपदेन परमात्मैव विवक्ष्यते। तदुक्तं परिमले—"परमात्मैव ह्यत्राकाशशब्देन नि-र्दिष्टः" इति। तथाच ब्रह्माश्रयस्य ब्रह्मत्वायोगेन ब्रह्मणि जीव-धर्माणामिवाक्षरे ब्रह्मधर्माणां तादात्म्येन व्यपदेश इति तद-नुसारेण परब्रह्माश्रयत्वरूपमब्रह्मलिङ्गमक्षरशब्दोपोद्बलितमत्रा-स्थूलत्वादिब्रह्मलिङ्गबाधकमिति न विरोधः ॥

"ईक्षतिकर्मव्यपदेशादि"त्यत्र परिच्छिन्नफलकोपासनाविषय-त्वमब्रह्मलिङ्गं "एतद्वै सत्यकाम परं चापरं च ब्रह्म"त्यस्य

SGDF
Sri Gargeshwari Digital Founda

विषयवाक्यत्वाभावात् परत्वस्य पिण्डापेक्षया प्राणेऽपि वर्तमानत्वेन जीवोपस्थित्यद्वारकब्रह्मलिङ्गत्वाभावाच्च वाक्यशेषश्रुतेक्षणीयत्वादिबाधकमिति सर्वमनवद्यम् । अधिकमन्यत्र द्रष्टव्यम् ॥

एतेन—अस्तु वा कथंचिदपि तत्परिजिहीर्षा, तथापि द्वितीयपादे "य एषोऽन्तरक्षिणी"त्यादौ तृतीयपादे द्युभ्वादिवाक्ये च तत्तदुपक्षिप्तस्य स्पष्टत्वस्यावर्जनीयत्वादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्; भावानवबोधात् । यद्धि चन्द्रिकाखण्डने—जीवमात्रधर्मतया झटिति प्रतीयमानसमन्वेतव्यपदार्थवृत्तिधर्मासमभिव्याहृतत्वादित्युक्तम्, तत्रहि प्रतीयमानान्तेन ब्रह्मोपास्थित्यद्वारकोपस्थितिविषय इत्यर्थो गम्यते । समन्वेतव्यपदार्थवृत्तीत्यनेन तु निर्णयवाक्यगत इत्यर्थो गम्यते । तदसमभिव्याहृतत्वं च तदनभिभूतत्वमेव पर्यवस्यतीति पूर्वोक्तमेव लक्षणमत्र स्पष्टमेव गम्यते । एतेन—स्पष्टत्वस्योक्तरूपत्वे जीवादिप्रापकलिङ्गाभावेन पूर्वपक्षानुदयप्रसङ्गादिति प्रकाशप्रसरोक्तम्—अपास्तम् । सर्वथातु न प्रथमपदार्थोऽद्वैत्यभिमतोऽनुपपन्न इति सर्वं सुस्थम् ।

## [४] द्वितीयतृतीयपादार्थनिष्कर्षः ॥

चन्द्रिकाकाराः—यच्च द्वितीये सविशेषनिष्ठत्वं तृतीये निर्विशेषनिष्ठत्वमित्युक्तम्, तदपि न, द्वितीयेऽपि "सर्वत्रेत्यत्र सर्वं खल्वि" त्यत्राविद्यादिसर्वभ्रमाधिष्ठानत्वादिरूपसार्वात्म्यादेः, "अत्ते"त्यत्र "अन्यत्र भूताच्च भव्याच्च" "महतो महीयानि"ति कालत्रयाबाध्यत्वादेः, "अन्तर"इत्यत्र "कं ब्रह्म खं ब्रह्म"ति पूर्ण-

SGDF
Sri Gargeshwari Digital Foundation

सुखत्वादेः,"अन्तर्यामी"त्यत्र"एष त आत्मे"ति जीवतादात्म्यादेः अदृश्यत्वादीत्याशौ च "यत्तदद्रेश्यमि"त्यदृश्यत्वादेस्सविशेषेऽनुपपत्तेः। तृतीयेऽपि "द्युभ्वाद्यी"त्यत्र "तमेवैकं जानथ" "यदा पश्यः पश्यते रुक्मवर्णमि"त्यादेः, "ईक्षतिकर्मे"त्यत्र " पुरुषमीक्षते' इति दृश्यत्वादेः, "दहर"इत्यादौ सत्यकामः सत्यसंकल्प इति कामादेर्निर्विशेषेऽनुपपत्तेरित्यादि—वर्णयन्ति ॥

अत्र खण्डनकारा एवं वर्णयन्ति—सविशेषब्रह्मनिष्ठत्वं विवक्षितधर्मकवाक्यविचाररूपत्वम् ; तद्विपरीतं निर्विशेषब्रह्मनिष्ठत्वम्। द्वितीयपदीयसार्वत्म्यादेरुपास्यतया विवक्षितत्वात् , तृतीयपादे धर्माणां ज्ञेयब्रह्मोपलक्षणतयाऽविवक्षितत्वात्—इति ॥

अयमाशयः—स्वार्थविशेषणतया विवक्षितविशेषसमर्पकनिर्णयवाक्यत्वम् सविशेषवाक्यत्वम्, स्वार्थविशेषणतयाऽविवक्षितविशेषसमर्पकनिर्णयवाक्यत्वं निर्विशेषवाक्यत्वम्। कुत्र विशेषस्य विवक्षा कुत्रच नेति निर्णयस्तूपक्रमादितात्पर्यग्राहकलिङ्गसमधिगम्यः। तत्र च "सर्वं खल्वि"ति वाक्यबोधितं सर्वतादात्म्यं न निर्णयवाक्यगम्यविशेषः। नहि तत्र सर्वतादात्म्यमप्युपास्यमिति तु बहवो मन्यन्ते। अस्मिन्मते खण्डनगतसर्वतादात्म्यादीत्यतद्गुणसंविज्ञानबहुव्रीहिः। "यस्य ब्रह्म च क्षत्रं चेत्य"त्र तु सविशेषाधिष्ठानं निर्विशेषमपि बोधितं यदत्र कस्यापि न निर्णयमिति कालत्रयातीतत्वादीनां अत्तृत्वविशेषविशिष्टेऽसम्बंधेऽपि न क्षतिः। सूचितश्चायमर्थः पूर्वमेव ॥

SGDF
Sri Gurgeshwara Digital Foundation

एतेन—"अन्तर उपपत्तेरित्ये"तद्विषयवाक्यमपि—व्याख्यातम् ; तत्राप्यक्ष्यधिकरणकत्वविशिष्टोपास्येश्वररूपनिर्णयपरवाक्यार्थे उक्तविशेषणानां विशेषणतया विवक्षितत्वात् । तत्रत्यं "कं ब्रह्म खं ब्रह्मे"ति तु पूर्वोत्तरपक्षयोर्निर्णीततात्पर्यकमिति नास्यापि सविशेषनिष्ठत्वक्षतिः ॥

अन्तर्यामिब्राह्मणे तु 'ममात्मा भद्रसेन' इति वत् "एव त आत्मेति विद्यादि"त्युपकारकत्वादिनोपपत्तेः सर्वनियन्तृत्वादिविशेषविशिष्टमेवोपास्यतया भाष्यादौ व्यवस्थापितमिति न दोषः । "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यत्र तु यद्यपि ज्ञेयमेव निर्दिश्यते, एवमपि प्रायिकत्वात्सविशेषनिष्ठत्वं न विरुद्धम् ॥

एतेन—तृतीयपादोऽपि—व्याख्यातः ; निर्णयवाक्यावगतानां सर्वेषामपि तात्पर्याविषयत्वेनाविवक्षितत्वात् । तात्पर्यविषयत्वे चोपक्रमादिविरोध इति पूर्वमेव निरूपितम् ॥

एतेन—किमिदमविवक्षितत्वम् ? न तावत्तात्पर्यगोचरत्वाभावः ; तात्पर्याभावे मानान्तरप्राप्तितद्विरोधादिरूपनिमित्ताभावात्, प्रत्युतोक्तब्रह्मधर्माणामन्यतोऽप्राप्त्याऽपूर्वत्वेनाविरोधेन च तात्पर्यस्यैव युक्तत्वादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम् ; निर्विशेषब्रह्मोपक्रमानुसारेण तदविवक्षाया उपपादितत्वात् । यथाच द्वितीये भ्रमाधिष्ठानत्वादिकं नोपास्यम्, तथा पूर्वमेव विवेचितम् । अस्तु वा तदुपास्यमपि, एवमपि तत्रोपास्यसमर्पणमत्र ज्ञेयसम-



SGDF
Sri Gargeshwari Digital Foundation

र्णमुपासनाप्रकरणाभावादिति न सत्यकामत्वादिविशिष्टमत्र विषयः ॥

एतेन—द्वितीये भ्रमाधिष्ठानत्वादिविशिष्टस्यैव तृतीये द्यु-भ्वाद्यायतनत्वादिविशिष्टस्यापि सविशेषत्वेन त्वदभिमतनिर्वि-शेषस्य पंचमाध्यायसिद्धतयाऽप्रामाणिकत्वादित्यादि प्रकाशप्रस-रोक्तम्—अपास्तम् ॥

एतेन—"यस्मिन् द्यौ"रित्यत्र लक्षणया चिन्मात्रपरत्वे "सर्वं खल्वि"त्यादेरपि प्रामाण्याय तन्मात्रपरता स्यादिति चन्द्रिकातत्प्र-काशप्रसरोक्ती—परास्ते । उपास्यत्वज्ञेयत्वाभ्यां विशेषेण ल-क्षणातदभावयोरूरीकरणेनादोषात् । ज्ञेयत्वं हि केवलवृत्तिविष-यत्वमेवेति पूर्वाधिकरण एव विवेचितमिति न तस्य निर्विशेष विरोधित्वम् । तथाच निर्विशेषवाक्ये आरोपितानामपि विशेषा-णां न विवक्षा वर्तते, नच सविशेषे निर्विशेषत्वं चास्माभिरूरी-कृतमिति न किंचिदवद्यम् ॥

एतेन—सविशेषे वस्तुतो निर्विशेषत्वस्य निर्विशेष आरो-पितविशेषस्य चाविरोधेऽप्युभयत्रोभयोक्तौ वाक्यव्यवस्थाऽयोगेन तन्निबन्धनपादव्यवस्था न युक्तेति चन्द्रिकाद्युक्तिः—परास्ता । "तमेवैकं जानथे"त्यत्र मनोमयवाक्य इव "तत्क्रतुं कुर्वीते"त्याद्यु-पासनाविधिर्नास्तीति प्रकाशप्रसरकारापादितं द्युभ्वाद्यायतनस्यापि सविशेषत्वमनवसरमेव । एतेन—उपासनाविध्यश्रवणे तुल्येऽपि केचन धर्मा उपास्या केचन नेत्यत्र नियामकाभावादिति—प्रकाश प्रसरोक्तम्—अपास्तम् । यथाह्युपलक्षणं काकः गृहस्य यावत्

SGDF Sri Gangeshwari Digital Foun

गृहस्थानं काकवत्वं नापादयति, एवं सत्यकामत्वादिकमपि न ज्ञेयब्रह्मणस्तटस्थत्वं गमयति। उपास्यत्वं च सगुणपरमात्मानुसंधानमेवेति यावदुपासनं गुणसम्बंधोऽपरिहरणीय एव ॥

एतेन—अविवक्षितत्व उपास्यत्वायोगवत् ज्ञेयोपलक्षकत्वस्याप्ययोगेनेत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। यथाच निर्विशेषब्रह्मणोऽपि शास्त्रगम्यत्वशास्त्रावैयर्थ्यब्रह्माद्वैविध्यादिकं तथा पूर्वमेव विवेचितम्। एतेन—अविवक्षितधर्मकब्रह्मणि प्रमाणसामान्याप्रवृत्तेरसकृदावेदितत्वादित्यादि प्रकाशप्रसरोक्तम्--अपास्तम्। सत्यपञ्चब्रह्मवादिनां "सर्वे वेदा यत्पदमामनन्ती"ति वाक्यं यद्युपपद्यते, तर्हि कथं सत्यमिथ्याब्रह्मद्वैविध्यवादिनां नोपपद्येतेति भवन्त एव विचारयन्तु। "सर्वोत्कर्षो देवदेवस्य विष्णोरि"त्यादिकं तु इन्द्राद्यपेक्षमेवोकर्षं बोधयति, नतु स एव ब्रह्मेति। एतेन—"ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणे"ति वचनमपि प्रकाशप्रसरोद्धृतं—व्याख्यातम्। नहीदमस्माकमपि विरुद्धमुपास्यतयैव गुणा विवक्षिता इति वदताम् ॥

अत्र हि अनुष्ठानार्थं कर्मणामिवोपासनार्थमपेक्षितज्ञानार्थत्वमेव ज्ञानार्थत्वमिति विवक्षितमिति हि न दोषः। यत्तु प्रकाशप्रसरे "ग्रहं संमार्ष्टी"त्यत्र ग्रहैकत्वादेरिव निर्ज्ञातविशेषणत्वादिरूपाविवक्षाज्ञापकाभावात् द्युभ्वाद्यायतनत्वादीनां नाविवक्षा संभवतीति वर्णितम्, तदिदं ग्रहैकत्वाविवक्षायामेकत्वविविशिष्टग्रहोद्देश्यत्वे विशिष्टोद्देशनिबंधनवाक्यभेदस्यैकत्वसंमार्गोभयविधानेऽनेकविधानप्रयुक्तवाक्यभेदस्य चापत्तिरेवाविवक्षाकारणम्,

SGDF
Sri Gangeshwari Digital Foundation

नतु निर्ज्ञातविशेषणत्वम् । अन्यथा ग्रहत्वस्याप्यविवक्षापत्ते"र्ग्रहैर्जु-होती"त्यत्र बहुवचनानुसारेण व्यक्तिविवक्षैवाङ्गीकरणीयेत्याद्यन्यत्र विस्तृतमित्यकिंचित्करम्। तथाच तत्र वाक्यभेदापत्त्यैकत्वाता-त्पर्यमिवात्रापि धर्मातात्पर्यान्न दोषः। अन्यथा "गङ्गायां घोष" इत्यत्रापि निर्ज्ञातविशेषणत्वाभावेन गङ्गापदार्थविवक्षापत्तेरिति न कोऽपि दोषः ॥

सर्वथाच सङ्गतिविशेषलाभेन सविशेषपादेऽपि निर्विशेषवि-चारेऽपि बहूनां सविशेषत्वस्य सविशेषनिर्विशेषवैशेष्यस्य च निरूपितत्वात् प्रायिकत्वात् सविशेषपादत्वादिव्यवस्था । एतेन—प्रायिकत्वात् पादव्यवस्थेति न युक्तम्; सर्वसांकर्यस्योक्तत्वेनेत्य-पि प्रकाशप्रसरोक्तम्—अपास्तमिति न किंचिदवद्यम् ॥४॥

### (५) ब्रह्मलक्षणस्याविद्यायामनतिव्याप्तिः ॥

यत्तु—"आनुमानिकमि"त्यादौ पूर्वपक्षिणा यस्य "महतः परमव्यक्तम्" "अजामेका"मित्यादेः प्रधानपरत्वं शंकितम्, तस्यै-कदेशस्य सिद्धान्तेऽपि ब्रह्मपरत्वाभावात् अविद्यादिपरत्वे च ब्रह्म-लक्षणस्य प्रधानेऽनतिव्याप्तावप्यविद्यायामतिव्याप्त्यपरिहारात्" इति चन्द्रिकायामुक्तम्, तदिदं "सूक्ष्मं तु तदर्हत्वादि"त्युत्तरसूत्रे-ऽव्यक्तशब्देन सूक्ष्मशरीरग्रहणमिति सिद्धान्तेनैव प्रधानग्रहणप-क्षस्य निरासेन तत एवाविद्यापरत्वस्याऽपि निरस्तप्रायत्वादनु-क्तोपालंभनमेव, अव्यक्तपदस्याविद्यापरत्वस्यैवानङ्गीकारात् ॥ एतेन—अजामन्त्रोऽपि व्याख्यातः । तत्रापि हि—"ज्योतिरुपक्र-

SGDF Sri Gargeshwari Digital Foundation

मस्तु तथाह्यधीयत एके " इति सिद्धान्तसूत्रे चतुर्विधभूतग्रामप्रकृतिभूताव्याकृततेजोऽबन्नानामेवाजापदेन ग्रहणमिति निरूपितमित्यविद्यापरत्वमनङ्गीकारपराहतमेव ॥

वस्तुतस्तु—"ईक्षतेर्नाशब्दमि"त्यशब्दत्वेन निरस्तः प्रधानकारणवादः प्रधानस्यापि शाब्दत्वं वर्तत इत्यत्रोपस्थाप्य तस्याशब्दत्वसमर्थनेन पुनरपि निरस्यते, नतु ब्रह्मलक्षणं कुत्रापि नातिप्रसक्तमिति निरूप्यत इत्येव खल्वत्रत्याद्वैतग्रंथसन्दर्भः। अत एव—"महतः परमव्यक्तमि"त्यव्यक्तशब्देन प्रधानग्रहणमुपपाद्य—" तस्य च शब्दवत्त्वादशब्दत्वमनुपपन्नमि"ति निरूप्य प्रवृत्तं—"तदेव च जगत्कारणं श्रुतिस्मृतिन्यायप्रसिद्धिभ्य" इति भाष्यमप्युपपद्यते। तथाचाव्यक्तशब्देन प्रधानग्रहणेऽपि केवलप्रधानपरिणामिता यथा सांख्यस्मृत्यादिसिद्धा, नैवं केवलाविद्यापरिणामिताकथाऽपि स्मृत्यादिसिद्धेति प्रकृतेऽव्यक्तशब्देनाविद्याया ग्रहणेऽपि न तत्रातिव्याप्तिरवसरति ॥

एतेन—ननु तत्र वाक्ये परशब्दस्योत्कर्षवाचित्वादिह कारणत्वधीरेव नास्ति; अतोऽविद्यापरत्वेऽपि न दोष इति चेत्, तर्हि प्रधानपरत्वेऽपि न दोष इति तन्निरासो व्यर्थ इति चन्द्रिकाप्रकाशः तन्नामानुल्लेखेन तदनुवादमात्रपरप्रकाशप्रसरश्च—परास्तः। प्रधानपरत्वे सशब्दत्वेन स्मृतिन्यायाद्यनुसारि तत्कारणत्वं यतो वेति श्रुतौ बोधितमिति शङ्का स्यादिति तन्निरासस्य फलवत्त्वेऽपि केवलाविद्याकारणत्वस्य केनापि समयेनासिद्धस्य "यतोऽवे"त्यत्र ग्रहणाप्रसक्त्या तन्निरासो विफल इति हि वि-

SGDF Sri Gurgeshwari Digital Foundation

शेषः सर्वविदित एव । अविद्यापरिणामित्वं ह्यद्वैतिनामेव संमतं-नान्येषां केषामपि । तन्मतेच—"परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते, न स्वतन्त्रा । सा चावश्यमभ्युपगन्तव्या । अर्थवती हि सा । नहि तया विना परमेश्वरस्य स्रष्टृत्वं सिद्ध्यति, शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः" इत्यादिभाष्येणाऽविद्योपहितचैतन्यमेव कारणतया सर्वत्र विवक्षितमिति; न शङ्कालेशोऽपि प्रसरति ॥

तथाचायं निष्कर्षः—अव्यक्तपदेन सूक्ष्मशरीरस्यैव ग्रहणम्, नाविद्यायाः, अविद्याया ग्रहणेऽपि न तन्मात्रकारणत्वं प्रधानकारणत्वमिव कुत्रापि प्रसिद्धमिति तदुपहितग्रहणमेवावश्यं स्वीकर्तव्यं समापतितमिति सर्वथा नाविद्यायामतिव्याप्तिरिति । इदमेवाभिप्रेत्य खण्डन उक्तम्—ईक्षाघटितकर्तृत्वसमानाधिकरणोपादानत्वस्याविद्यायामव्यक्तेऽतिव्याप्तेरभावादिति । एतेन—ईक्षाघटितेत्यादित्वदुक्तिः कथं सन्दर्भशुद्धेति प्रकाशप्रसरोक्तम्—अपास्तम् ॥

अयमत्र सांख्यमताद्द्वैतमतस्य विशेषः—यत् सांख्यमते-प्रकृत्युपहितः पुरुषो नाभिन्ननिमित्तोपादानम्; केवलं प्रकृतिमात्रमुपादानकारणमात्रमद्वैतमतेऽविद्योपहितचैतन्यमेवाभिन्ननिमित्तोपादानकारणमिति । एतेन—सांख्येनापि केवलप्रकृतेः केवलब्रह्मणो वा कारणत्वानङ्गीकारात्, अन्योन्यसचिवकारणत्वस्य तूभाभ्यामङ्गीकारात् ब्रह्माविद्यापुरुषप्रकृतिनाममात्रभेदे विवादापर्यवसानप्रसङ्गात् इति गुरुराजोक्त—परास्तम् ॥

SGDF
Sri Gargeshwari Digital Founda

ब्रह्मकारणत्वं ह्यस्माकं श्रौतमिति पूर्वमेव विवेचितम् । तथा-च गौणेक्षणादिनाऽपि प्रधानकारणत्वं प्रधानस्यापि श्रौतत्वे भवेदिति तस्य शाब्दत्वनिरास एवास्माकमभिमतः । नहि वयमविद्यायामपि जडत्वेनाकारणत्वमूरीकुर्मः, किन्तु श्रौतत्वाभावादेव । एतेन—अविद्यायामिव प्रधानेऽपि त्वदुक्तलक्षणस्यानतिप्रसक्तत्वेन तत्र तन्निरासप्रयासो विफल इति प्रकाशप्रसरोक्तम्—अपास्तम् ॥

यत्तु अत्र खण्डने कर्तृत्वसमानाधिकरणमुपादानत्वं विवक्षितम्, तदिदमभिन्ननिमित्तोपादानत्वमेव कारणत्वमस्माकमभिमतमिति सूचनार्थम् । एतेन—कर्तृत्वमात्रस्य लक्षणत्वसंभवे तत्रोपादानत्वांशनिवेशो व्यर्थ इति प्रकाशप्रसरोक्तम्—अपास्तम् ॥

एतेन—"बह्वीः प्रजाः जनयन्तीमि"त्यपि—व्याख्यातम् । बहुप्रजोत्पत्तिप्रयोजकत्वेनोपहितशक्तिताबोधनस्यैव पूर्वोद्धृतभाष्योक्तस्यात्र बोधनात् । एतेन—"बह्वीः प्रजा जनयन्तीमि"त्यादिनाऽजाशब्दोदिते कर्तृत्वस्य श्रुतत्वेनाप्रसक्तत्वोक्तिरप्ययुक्तैव, अभिन्ननिमित्तोपादानत्वमुपहितब्रह्मनिष्ठशक्तिविशेष इति तस्येश्वरस्येवानादित्वात् नाविद्याकार्यत्वम् । एतेन—त्वदुक्ताभिन्ननिमित्तोपादानत्वस्याप्याविद्यकत्वेनोपादेयस्योपादानाश्रितत्वात् समग्रस्यापि लक्षणस्याविद्यायामतिव्याप्तिरिति प्रकाशप्रसरोक्तम्—अपास्तम् । सर्वथातु अजापदस्याव्यक्तपदस्य चाव्याकृततेजोऽबन्नसूक्ष्मशरीरयोरेव ग्रहणमिति भाष्य एव व्युत्पादनादतिव्याप्त्यापादनमिदमनवसरमेव ॥

SGDF
Sri Gangeshwari Digital Foundation

एतेन— प्रधानस्य स्वातन्त्र्येणोपादानत्वमित्याशंक्य ब्रह्मण एव तदिति भवतैव निर्णीततया पुनरप्यत्र शंकायां बीजाभावादिति प्रकाशप्रसरोक्तं खण्डनाशयानबोधविजृंभितमेवेति—सूचितम्। यत्तु परिमले—"एतदधिकरणसिद्धवत्कारेण च जन्मादिसूत्र उभयकारणत्वव्यवहारः। यद्यपि तदनन्तरमिदमारब्धव्यम्; तथापि निर्णीततात्पर्यैर्वेदान्तैर्निमित्तत्वमात्रसाधकानुमानस्य कालातीतत्वं सुवचमिति समन्वयावसाने लिलिखे। अप्रदर्शिते तु विषये समन्वयः दुष्प्रतिपाद इति कारणतामात्रं तदोक्तमि"ति वर्णितम्, तत्पर्यालोचनेन त्वानन्दमयाधिकरणात् पूर्वमपि न प्रकृत्यधिकरणलेखनं युक्तमिति सम्यगेवावगम्यते॥

एतेन—गतिसामान्यप्रपंचनार्थमुत्तरो ग्रन्थसन्दर्भ इति गतिसामान्यसूत्रे त्वद्भाष्य उक्तत्वेन प्रकृतिसूत्रस्यैतदानन्तर्यस्यैव युक्तत्वादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्।

"कामाच्च नानुमानापेक्षे"ति सूत्रं हि गुणसूत्रत्वान्न पृथक् संगतिमपेक्षत इत्यनुमानपदप्रयोगान्यथानुपपत्याऽऽनन्दमयप्रधानवादोऽपि गतिसामान्यप्रपंचनार्थं निरसनीय इति प्रधाननिरासपरतया व्याख्यातम्। "प्रकृतिश्चे"ति सूत्रं हि स्वतन्त्रं नानन्दमयसूत्रशेषतया व्याख्यानमर्हति। एतेन—"कामाच्चे"ति सूत्रस्येव प्रकृतिसूत्रस्यापि स्वारसिकसङ्गतिसंभवेनातिव्यवधाने हेत्वभावदोषो दुरुत्तर एवेति प्रकाशप्रसरोक्तमपि—परास्तम्। सर्वथातु न पादक्रमोऽद्वैतमतेऽनुपपन्न इति सिद्धम्॥

एतेन—वस्तुतस्तु—"अजामेकामि"त्यादेः सांख्येन प्रधानपर-

SGDF Sri Gangeshwari Digital Foundation

त्वमभ्युपेत्य तत्रातिव्याप्त्यभिधानमिव परैस्तस्याविद्यापरत्वे तत्रातिव्याप्त्यापादानं सूपपन्नमेवेति प्रकाशप्रसरोक्तम्—अपास्तम्। साध्यसदृशाः केवाऽत्र परे विवक्षिताः? नतावदद्वैतिनः; तैरविद्यामात्रकारणतानङ्गीकारात्, नाप्यतत्त्ववादिनः; तैरप्यनङ्गीकारादिति सप्तमप्रमाणसिद्धानां परेषां निराकरणं नास्माकं कर्तव्यमिति विस्तरभया दुपरमामः ॥ ६ ॥

## (६) अद्वैतमते पादक्रमोपपत्तिः॥

यत्तु चन्द्रिकायामद्वैतमते न पादक्रम उपपन्नः; सुबोधस्य प्राथम्ये आनन्दमयादौ निर्विशेषविचारायोगात्, दुर्बोधस्य प्राथम्येतु स्पष्टब्रह्मलिङ्गानां प्राथम्यायोगाच्च। ईक्षत्यधिकरणोक्ताशब्दत्वस्य विक्षिप्य चतुर्थपादे व्युत्पादने हेत्वभावश्चेत्याद्युक्तम्, तत्रैवं प्रष्टव्यम्—यत् भवतां पादक्रमः किन्निबंधन इति। सुबोधस्य प्राथम्ये—"तत्र प्रथमतोऽन्यत्र प्रसिद्धानां समन्वयः। शब्दानां वाच्य एवात्र महामल्लेशभङ्गवत्" "इत्यनुव्याख्यानस्य, उभयत्र प्रसिद्धानां समन्वयेऽन्यत्र प्रसिद्धिनिरासमात्रे यत्नः, अन्यत्रप्रसिद्धानां तु विष्णौ प्रसिद्धिरप्युपपादनीयेति चन्द्रिकाप्रकाशस्य च विरोधः। उभयत्र प्रसिद्धानामेव प्रथमपादे विचारापत्तिश्च दुर्बोधस्य प्राथम्येतु—यौगिकस्यावयवार्थे रूढ्यपेक्षावद्रूढस्य योगापेक्षाया अभावान्नाम्नां प्राथम्यमिति स्वोक्तिविरोधः, यौगिकानामपि प्रथमं विचारापत्तिश्चेति पादक्रमव्यवस्था सुबोधत्वादिप्रयुक्तेति भवद्भिरपि नोरीकर्तुं शक्यम्। अतः उपजीव्योपजीव-

SGDF
Sri Gargeshwari Digital Foundation

क्रमाभावेनेच्छया चैव पादक्रमव्यवस्था निरूपणीया। तदुक्तं खण्डने —प्रथमपादोक्तकारणत्वादि सिद्धवत्कृत्य तदुपजीवनेन द्वितीयादि-पादप्रवृत्तेरुपजीव्योपजीवकभावेन पादयोः क्रमोपपत्तेरिति ॥

एतेन—प्रथमद्वितीयपदयोरुपजीव्यवर्णनेन सुबोधस्य प्राथम्यं वा दुर्बोधस्येति विकल्पदूषणानामपरिहारादिति प्रकाशप्रसरोक्तमपास्तम्। "सर्वं खल्विदं ब्रह्म"त्यत्र तु ब्रह्मपदार्थः तज्जत्वतल्लत्वाभ्यामपि परमात्मैवेति निर्णयानन्तरमेव सर्वत्रप्रसिद्धाधिकरणे वाक्यशेषेण ब्रह्म समर्प्यत इति सिद्धान्तः स्वीकृतः। एवमत्ता चराचरग्रहणादि"ति लयकारणत्वं पूर्वपादनिर्णीतमेवात्र ब्रह्मतां गमयतीति सिद्धान्तिनो मन्यन्ते। नहि सर्वत्र प्रसिद्धाधिकरणे सार्वात्म्यं मनोमयब्रह्मतागमकमिति सिद्धान्तिनो मन्यन्ते, नहि अत्त्रधिकरणे पुण्यपापरहित्यं ब्रह्मतागमकमित्यादि पूर्वमेव विवेचितम्। अस्तुवा कथंचित् सार्वात्म्यसर्वदुरितविरहावेवात्र ब्रह्मतासिद्धान्तयुक्तौ, एवमपि "सर्वात्म्यसर्वदुरितविरहाभ्यामिहोच्यते। ब्रह्मैवाव्यभिचारिभ्यामि"त्यन्तरधिकरणसिद्धान्ते-सावात्म्यादिकमपि ब्रह्मलिङ्गतया व्यवस्थापितमिति न दोषः। खण्डनवाक्ये कारणत्वादीत्यादिपदेन तेषामपि ग्रहणं विवक्षितमेव। यथाच सर्वत्र प्रसिद्धाधिकरणेऽत्त्रधिकरणेऽन्तराधिकरणेऽन्तर्याम्यधिकरणेऽदृश्यत्वादिगुणकाधिकरणे च—"सर्वं खल्विदं ब्रह्म" "अन्यत्र धर्मादन्यत्राधर्मात्" "कं ब्रह्म खं ब्रह्मे"त्याद्यमृतत्वबोधकवाक्यं "यः सर्वज्ञ" इत्यादिकं च न निर्णयतात्पर्यकं तथा पूर्वमेव विवेचितम् ॥

SGDF
Sri Gargeshwari Digital Foundation

एतेन--द्वितीये "सर्वत्रे"त्यत्र सार्वात्म्येन, "अत्ते"त्यत्र पुण्यपापराहित्यादिना, "अन्तर" इत्यत्रामृतत्वादिना ब्रह्मलिङ्गेन "अन्तर्यामी" त्यत्रान्तर्यामित्वादिना, "अदृश्यत्वादी"त्यत्र सर्वज्ञत्वादिना निर्णयवाक्यगतेन विप्रतिपन्नार्थस्य निर्णीतत्वेनेत्यादि प्रकाशप्रसरोक्तम्—परास्तम् ॥

"जन्माद्यस्य यत" इति प्रक्रान्तं कारणत्वं सार्वज्ञादिब्रह्मलिङ्गमिति व्यवस्थापनं हि अशब्दत्वसिद्धवत्कारेणेक्षत्यधिकरणेन प्रधाननिरासद्वारा क्रियते चेदपि चतुर्थपादस्य न प्राथम्यप्रसङ्गः। शास्त्रयोनित्वं प्रतिज्ञातमुपपादयितुं हि वाक्यविचार एव प्रथमतो युक्तः, न पदविचारः। वस्तुतस्तु स्थितस्य गतिश्चिन्तनीयेति केनापि प्रकारेण पादक्रम उपपादनीय इत्येवाद्वैतिभिरेवमुच्यते। नैमित्तिके सति निमित्तानुसरणम् , नतु निमित्तमस्तीति नैमित्तिकारोप इति हि न्यायः सर्वविदित एव ॥

एतेन—तुरीयपादोक्तं प्रधानस्याशब्दत्वमुपजीव्येक्षित्यधिकरणप्रवृत्त्या द्वितीयपादोदितलिंगानामप्युजीव्यत्वस्योक्तरीत्या सूपपदतया प्राथम्यं स्यादिति प्रकाशप्रसरोक्तं—परास्तम्। यदि तूपजीव्योपजीवकभावोऽपि न नियामक इत्येवाग्रहः, तर्हि इच्छैव नियामिका भवतु। सर्वथातु सुबोधत्वादिविकल्पोऽनवसर एव। एतेन—तर्कप्रकाशेश्रीकंठेन-स्वतन्त्रेच्छस्येति न्यायेन पूर्वापरीभाव इति यदुक्तं तदपि—व्याख्यातम् ॥

वस्तुतस्तु—भवतां मदलेशभंगदृष्टान्तानुसारेण वयमपि दुर्बोधत्वमेव प्राथम्यप्रयोजकमित्यूरीकुर्मः, एवमपि स्पष्टब्रह्मलिङ्गाना-

SGDF
Sri Gurgaonkar Digital Foundation

मेव प्राथम्ये निमित्तं तु अस्पष्टब्रह्मलिंगानां सविशेषनिर्विशेषान्य-तरविषयकानां बहूनां वर्तमानत्वात् स्पष्टब्रह्मलिंगानां चाधिकं निर्विशेषवाक्यगतानां विचारणं क्लेशसाध्यमेवेति, स्पष्टपदप्रयोग—मात्रेण वाक्यार्थविचरे क्लेशन्यूनता नावगम्यत इति न दोषः। अस्पष्टब्रह्मलिङ्गत्वेन साम्येऽपि निर्विशेषोपस्थापनानन्तरं सवि-शेषपरत्वं कुत्रेति व्यवस्थापनमेव क्लेशसाध्यमित्युपासनाख्या-नां द्वितीयपादविषयत्वमपि सिद्धमेव। सर्वथातु न पादक्रमानु-पपत्तिरद्वैतमते ॥

एतेन—ईक्षत्यधिकरणोक्ताशब्दत्वस्य व्यवहितचतुर्थपादे प्रकृ-त्यधिकरणे व्युत्पादने हेत्वभाव इति चन्द्रिकोक्तमपि-परास्तम्। तत्र हि ब्रह्मधिकरणसाध्यमशब्दत्वं हेतुत्वेनैव विवक्षितम्, नतु साध्यत्वेनेति, कारणत्वादिना कुत्र कीदृशं ब्रह्म विवक्षितमिति विचारानन्तरमेवाशब्दत्वनिरूपणं युक्तम्, नतु ईक्षत्यधिकरणा-नन्तरमेव। अत एव अशब्दमिति पदनिर्देशः सार्थकः। तेन हि चतुर्थपादार्थ एव प्रकृतोपयोगितया सूत्रकारेण ज्ञाप्यते। प्रकृत्य-धिकरणे यत्र ब्रह्मणोऽभिन्ननिमित्तोपादानत्वं व्यवस्थाप्यते, तत्र हि न प्रधानस्याशब्दत्वं समन्वयापेक्षितमुपपाद्यते, किन्तु सर्वेषां वेदान्तानां समन्वयेनेदृशं ब्रह्म पर्यवस्यतीत्युपसंहार एव क्रियते। अतएव जन्माधिकरणानन्तरमेवास्याधिकरणस्य न प्रवृत्तिरिति परिमले व्यक्तम्। तथाच ब्रह्मणो निमित्तत्वमात्रं प्रधानाधिष्ठातृ-त्वेनेति योगमतनिरास एवात्राभिमतः, नतु तदशब्दत्वप्रतिपादन-मिति न दोषः ॥

SGDF Sri Gargeshwari Digital Foundation

अस्तु वा कथंचित् प्रधानस्यानुपादानत्वमेवात्राशब्दत्वेन क्रियत इति, एवमपि अशब्दत्वस्य चतुर्थपाद एव सङ्गतिः पूर्वमेवोपपादितेति न दोषः। एतदेवाभिप्रेत्य चन्द्रिकाखण्डन उक्तम्—प्रधानस्योपादानत्वांशेऽप्यशब्दत्वव्युत्पादनार्थं प्रकृत्यधिकरणप्रवृत्तेरिति। यद्यपि ईक्षत्यधिकरणेऽपि प्रधानस्योपादानत्वमेव निरस्तम्; तथापि तत्र स्वतन्त्रोपादानत्वं निषिद्धमत्रतु ब्रह्माधीनमप्युपादानत्वं न प्रधानस्य, किन्तु मायाया एवेति निरूप्यत इति न विरोधः॥

## [७] मयडन्तानन्दमयपदस्य दुःखिबोधकत्वम् ॥

आनन्दमय इत्यत्र मयटो न प्राचुर्यार्थत्वम्, किन्तु विकारार्थत्वमेव। अन्नमयादित्रयपाठभङ्गप्रसङ्गो ह्यन्यथा समापद्येत। सर्वत्राऽपि मयटः प्राचुर्यार्थत्वमिति कल्पना तु न संभवति। प्राणमयमनोमयशब्दयोः "द्व्यचःछन्दसी"ति विशेषशास्त्रेण सामान्यशास्त्रस्य प्राचुर्यार्थमयड्विधायकस्य बाधादवश्यं विकारार्थत्व ऊरीकर्तव्ये विज्ञानमयानन्दमयशब्दयोरपि "तत आगत" इति कार्यत्वविवक्षया विकारार्थत्वमेवोरीकर्तुं युक्तम्। अस्तुवा प्राचुर्यार्थत्वम्, एवमपि दुःखाल्पत्वविवक्षाया अपि विकारार्थत्वपर्यवसानप्रयोजिकाया अत्रापत्तिरपरिहार्यैवेति चन्द्रिकाखण्डने निरूपितम्॥

युक्तं चैतत्—अत एव हि "येऽन्नं ब्रह्मोपासते" इत्यादौ विनामयटं कारणमुखेन कार्यस्तुत्यादिकं क्रियमाणमुपपद्यते। "अन्नात् पुरुष" इति वाक्यानन्तरमेवान्नमयादिवाक्यप्रवृत्तिरप्यममेवार्थमु-

SGDF
Sri Gangeshwar Digital Foundation

पोद्बलयति । कारणत्वलक्षणेन लिलिक्षयितस्य ब्रह्मणः विना मयट-मन्नादिशब्दमात्रेण बोधनमपीदृशानामेवोपपद्यते । अन्यथा कथमन्न-मयं ब्रह्मेति व्यजानादित्यादिना नोपदेशः प्रवृत्तः । तथाच प्राय-पाठाऽऽनुसारेण विकारार्थमयडन्तत्वमेव परिमलोक्तरीत्याऽन्नर-समर्थविज्ञानमयानन्दमयशब्दानामपि युक्तम् ॥

एतेन—अन्नमये मयटो विकारार्थत्वे "येऽन्नं ब्रह्मोपासते" इति ब्रह्मशब्दः "अद्यतेऽत्ति च भूतानी"त्युक्तसर्वोपजीव्यत्वसर्वात्तृ-त्वादिलिङ्गसमुदायः "एतमन्नमयमात्मानमुपसंक्रामती"ति ज्ञानि-प्राप्यत्वं च बाधकं वर्तत इति विशेषशास्त्रस्यापि द्वयचश्छन्दसी"-ति शास्त्रस्य न प्रवृत्तिरिति—प्रकाशप्रसरोक्तम्—अपास्तम् । व्याकरणशास्त्रप्रवृत्तिबाधकं व्याकरणगतशास्त्रान्तरमेव, नतु लिङ्गादिकम् । यथाचा"न्नं ब्रह्मे"त्यादावुपासनान्तरविवक्षयाऽन्न-मयाब्रह्मत्वपक्ष उपपद्यते, तथा पूर्वमेव विवेचितमिति न पिष्टपेष-णार्थं प्रवर्तामहे ॥

अत्रान्नमयादिशब्देन शरीरमेव विवक्ष्यत इत्येकं मतम्, तदव-च्छिन्नचैतन्यं विवक्षितमित्यपरं मतम् । आद्येऽन्नादिपदेन प्राणा-दिशब्देन समष्टिप्राणः वायुतन्मात्रा वा विवक्ष्यते। द्वितीये तु व्यष्टिप्राणग्रहणमपि न दुष्टम् । एतेन—मनोमयादिकमपि—व्या-ख्यातम ॥

एतेन—प्राणमयेच प्राणानां प्राणविकारत्वासंभवः, अनुवा-कान्तोक्तस्य "यतो वाचो निवर्तन्ते" इति मन्त्रस्य मनोमयं प्र-त्युदाहृतत्वेन वाङ्मनसागोचरत्वादिबाधकसमुदायो जागर्ती-

SGDF Sri Gangeshwar Digital Foundation

त्यादिप्रकाशप्रसरोक्तम्—अपास्तम्। नहि स्वरूपचैतन्यमात्रमिव केवलं करणावस्थं मनोऽपि कस्यापि विवक्षतया प्रत्यक्षमित्येतद्बोधनमेव मनोमयपर्यायगतावाङ्मनसागोचरत्वश्रुत्या बोध्यते, नतु करणभूतं मनः मनोऽवच्छिन्नं चैतन्यं वा परमात्मेति। तथाच केवलकरणमनसोऽपि ब्रह्मत्वोपासनमेव प्रायपाठानुसारेण तत्र विवक्ष्यत इति न कोऽपि दोषः ॥

यथाच "सैषाऽऽनन्दस्य मीमांसे" इत्यानन्दमीमांसा, केवलानन्दपदप्रयोगश्चानन्दमयस्य न ब्रह्मत्वं गमयति, तथा पूर्वमेव विवेचितम्। एतेन—सैषाऽऽनन्दस्येत्यादिना जीवानन्दस्य परिमितानन्दत्वमुक्त्वाऽनुवाकान्ते ब्रह्मानन्दस्य पूर्णत्वोक्त्या "को ह्येवान्यादि"त्याकाशाख्यविष्णोः लोकचेष्टकत्वोक्त्या चानन्दमये मयटो व्यधिकरणविजातीयाल्पतानिरूपकत्वमित्यादि प्रकाशप्रसरोक्तम्—परास्तम्। दत्तोत्तरत्वात्। नहि वयमत्र ब्रह्मणि दुःखाल्पत्वमापादयामः, किन्त्वल्पदुःखस्य न ब्रह्मत्वमिति। एतेन—प्रकृते च ब्रह्मणि दुःखलेशस्य ग्राहकमानाभावात् प्रत्युत "निरवद्यो निरनिष्ट" इति तद्विपरीतग्राहिमानस्यैव सत्त्वाच्च प्राचुर्यार्थत्वेन मयटो न ब्रह्मणि दुःखलेशस्य प्रसक्तिरिति प्रकाशप्रसरोक्तमनुक्तोपालंभनमिति—सूचितम्। सर्वथा च नानन्दमयब्रह्मतावादः संभवतीत्यलमतिविस्तरेण ॥७॥

SGDF
Sri Gargeshwari Digital Foundation

## [८] पुल्लिंगेन तच्छब्देन ब्रह्मपरामर्शोपपत्तिः ॥

यत्तु चन्द्रिकायां "सोऽकामयते"ति तच्छब्देन पुंलिंगेन ब्रह्मणो न परामर्श इत्युक्तम्, तदिदं पूर्वमेव "तस्यैष एव शारीर आत्मा यः पूर्वस्ये"ति पुच्छब्रह्मण आत्मशब्देन निर्देशानन्तरमेवोक्तवाक्यप्रवृत्त्या प्रकरणविच्छेदेनानन्दमयपरामर्शस्यासंभवाच्च पूर्वमेव खण्डितम्। एतेन—प्रकृते चानन्दमयप्रकरणं समाप्य "अथातोऽनुप्रश्ना" इति कृतस्य प्रश्नस्य परिहारविवक्षया "सोऽकामयते"ति तच्छब्देनाऽऽनन्दमयं परामृश्य तस्य जगद्धेतुत्वमुच्यते; नचात्र सन्निहितपुच्छब्रह्मपरामर्शः, स इत्यस्य पुंलिंगत्वात्, ब्रह्मणस्तु नपुंसकशब्दनिर्दिष्टत्वात्, आनन्दमयस्यापि 'तस्यैष एव शारीर आत्मे"ति प्रकृतत्वात् नात्र गुणभूतलिङ्गेन प्रातिपदिकबाधनमित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। आनन्दमयप्रकरणसमाप्त्यनन्तरं हि न वेद्यब्रह्मविवक्षा युक्ता, किन्तु प्राप्यपरपदार्थविवक्षैव। "सत्यं ज्ञानमि"ति लक्षणानन्तरं "तस्माद्वा एतस्मादि"त्यात्मशब्दसमानाधिकरणेन तच्छब्देनापि पुंलिङ्गेन पूर्वं ब्रह्मण एव विवक्षेति हि भवतामपि संमतम्। तथाच तच्छब्दस्य पुंलिङ्गस्यैव कारणवाक्ये पूर्वं प्रक्रमात् "सोऽकामयते"ति वाक्येऽपि ब्रह्मण एव परामर्शो युक्तः॥ "अन्यथा—"असद्वा इदमग्र आसीदि"ति कथं वाऽसत्पदेन नपुंसकेनानन्दमयपरामर्शो भवतामिति भवन्त एव विवेचयन्तु। "तस्यैष एव शारीर आत्मे"त्यत्र

SGDF
Sri Gargeshwari Digital Foundation

हि एषपदेन पुच्छब्रह्मण एव विवक्षेत्येवास्मदीयसिद्धान्त इत्यानन्दमयस्य पुच्छब्रह्मापेक्षया नात्र सन्निधानमस्तीति लिंगानुसारेण प्रातिपदिकांन्यथानयनमप्यपरिहरणीयमेव ॥

एतेन—त्वदीयभाष्योक्तदिशा त्वयाऽपि लिङ्गस्य व्यवहितात्मापेक्षया नेयत्वेनात्यन्तव्यवहितपरामर्शविषयत्वस्य प्राप्तेरित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्, अस्मद्भाष्यकाराणां हि अयमेवाभिप्रायः—यद् ब्रह्मात्मनोरभेदेन पुंलिङ्गस्थल आत्मत्वेन नपुंसकस्थले ब्रह्मत्वेन ग्रहणमिति न लिङ्गविशेषमात्रेण ब्रह्मपरमर्शववर्णनं शोभत इति। नह्यानन्दमयस्यापरात्मनः प्रकरणमप्यत्रास्तीति तत्रसकृदेवावेदितम्। अन्यथा—"आहो विद्वानमुं लोकं प्रेत्ये" त्यव्यवहितप्रकृतविद्वत्परामर्शित्वं कथं भवतां न संभवति? तथाच परमप्रकरणपर्यालोचनयैवात्र तच्छब्दार्थो वक्तव्यः। तत्रच ब्रह्मशब्देनैवोपक्रम इति "तस्मादि"त्यादाविव लिङ्गापर्यालोचनेनैव प्रकरणपरामर्शः करणीय इत्यज्ञानविषयस्यैव प्रकरणमित्यज्ञानविषयशब्दस्य नित्यपुंलिङ्गत्वात् "सोऽकामयते"ति पुंलिङ्गप्रयोगः- सर्वथा पुच्छब्रह्मग्रहणेऽप्युपपद्यते। व्यक्तं चैतदधस्ताद्विवेचितम् ॥

यत्तु प्रकाशप्रसरे—आनन्दमयस्य जीवत्वं त्वदीयभाष्यभामत्याद्यनुक्तमित्याद्युक्तम्, तदिदमस्मन्मतस्वरूपाज्ञानविजृंभितम्। नहि वयं कोशरूपमन्तःकरणावच्छिन्नचैतन्यमपि जीवं ब्रह्माभिन्नं मन्यामहे। नहि आनन्दात्मकब्रह्माविद्याप्रयुक्तान्तःकरणावच्छिनोऽपि जीव आनन्दमयो न भवितुमर्हति। सर्वथातु नाद्वैतमतमवद्यम् ॥८॥



SGDF
Sri Gurgeshwari Digital Foundation

## (९) मनोमयश्लोकस्य मुख्यब्रह्माविषयत्वम् ॥

मनोमयपर्यायगतश्लोकस्य यथा न मनोमये ब्रह्मतागमकत्वं तथा पूर्वमेव विवेचितम्। एतेन—मनोमयपर्याये "यतो वाच" इति मनोमयस्य ब्रह्मत्वमुक्तमिति प्रकाशप्रसरोक्तम्—अपास्तम्। अत्रहि मनसापदेन करणमन्तःकरणमात्रं मनोमयप्रयोजकमेव स्तूयते। नह्यत्र "येन ब्रह्मोपासते" इत्यादाविव ब्रह्मशब्दाम्नान-मपि वर्तते! तथाच प्रायपाठानुसारेण कथं चित् मनोब्रह्मोपास-नस्यापि कल्पनायामपि न तद्ब्रह्मत्वविनिर्णयः। अत एव मनो-मय इति मयट्प्रयोगोऽपि स्वरसः। तथाचोपक्रमे मनोमयस्याब्र-ह्मत्वनिश्चयादुपसंहारस्यापि तदब्रह्मत्वेन स्तुत्यादिनैव सार्थक्यमू-रीकर्तव्यम्। तदुक्तं खण्डने—उपक्रमस्थस्य मनोमय इति मयटो विकारार्थत्वेन मनोमयस्याब्रह्मत्वनिश्चयादुपसंहारगतस्य "यतो-वाच" इत्यस्योपक्रमाधिकरणन्यायेन प्राशस्त्यपरत्वेन नेयत्वा-दिति ॥

अत्र खण्डने—ब्रह्मत्वनिश्चयादिति यदुक्तं तेन "व्याख्यानतो विशेषप्रतिपत्तिरि"ति न्यायस्य नात्र प्रवृत्तिरिति सूचितम्। यत्र "द्यक्ताः शर्करा उपदधाती" त्यादौ उपक्रमे सामान्यं निर्दिष्टं तत्र ह्युपसंहारस्य व्याख्यानरूपत्वेन प्राबल्यं युक्तम्, अत्रतु मनोमयो न सन्दिग्ध इति मनोमयस्यैव स्तुतिं संपादयितुं "यतो वाच" इत्येव कल्पनं युक्तमिति सिद्धम्। "अग्नेः ऋग्वेदः" इत्यत्र "मुखे ऋचा

SGDF
Sri Gangeshwari Digital Foundation

क्रियते" इत्यस्यार्थवादः, एवं "वायोर्यजुर्वेद" इति "उपांशु यजुषे" त्यस्यार्थवाद इति खलु मीमांसाकमर्यादा, तथाचर्क्पदस्य वेदपरत्वं कथमभ्यासेन भवति ? सकृदेवाम्नानादित्युपक्रमाधिकरणविषयः "उच्चै ऋचा क्रियते" इत्यादिकं प्रसिद्धमेव वर्तते ॥

एतेन—उपक्रमाधिकरणन्यायेनेत्युक्तमपास्तम् , तत्राभ्यासेनैवोपक्रमबाधस्य निर्णीतत्वेन दृष्टान्तासंप्रतिपत्तेरिति प्रकाशप्रसरोक्तं मीमांसासंप्रदायाज्ञानमूलमिति—सूचितम् । नह्यत्र ब्रह्मशब्दाभ्यासो वर्तत इति तु पूर्वमेव विवेचितम् । सर्वथा तु "यतो वाच" इति श्लोकेन मनोमयब्रह्मतासाधनमसंभवदुक्तिकमेवेत्यलमतिविस्तरेण । यथाचानन्दमयाधिकरणे निर्गुणब्रह्मविवक्षायामपि "सोऽकामयते" त्यादीनामुपपत्तिस्तथा पूर्वमेव विवेचितम् । अवान्तरतात्पर्यविषयता हि कामादिश्रुतेरद्वैतिनां समतैव । एतेन--नहि श्रुतिसूत्रतात्पर्याविषयोर्थःकस्यचित् साधनस्य बाधनस्य वेष्टे इति प्रकाशप्रसरोक्तमपास्तम् । गुणादिविवक्षाऽविवक्षादिनिमित्तं ब्रह्मद्वैविध्योपपत्तिश्चपूर्वमेव विवेचितेत्यलं पिष्टपेषणेन ॥१०॥

## [१०] अद्वैतमते भेदव्यपदेशाविरोधः ॥

"भेदव्यपदेशाच्चे" ति सूत्रे भेदपदोपादानं हि नाद्वैतिनां प्रतिकूलम् । तत्रह्यानन्दमयपदार्थस्य जीवस्य निर्विशेषचैतन्यस्य च भेदो व्यपदिश्यत इति खल्वद्वैतिनो मन्यन्ते । नह्यद्वैतिनो विशिष्टस्यापि जीवस्य परमात्मनाऽभेदं मन्यन्ते । व्यक्तं चैतद्भाष्य एव । नह्यत्र भेदानुपदेशे मुमुक्षुं प्रति तत्त्वोपदेशः कृतः भवति । अन्यथा

SGDF
Sri Gargeshwari Digital Foundation

हि विशिष्टजीवज्ञानादेव मोक्षापत्तिरिति खलु शंका कथं वारिता स्यात्? एतेन—मुमुक्षुं तत्त्वजिज्ञासुं प्रति तत्त्वनिर्णायकसूत्रे मिथ्याभेदकथनस्यायुक्तत्वादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्। नह्यत्र भेदस्तात्त्विकतयोपदिष्टः सूत्रकारेण। नह्यतात्त्विकोपदेशस्तात्त्विकज्ञानजननासमर्थः। व्यवस्थापितं हि भामत्यादौ अतात्त्विकेभ्योऽपि तात्त्विकप्रतिपत्तिस्संभवतीति। "रसं ह्येवायमि"ति वाक्ये हि लब्धा यः प्रतिपादितः स व्यावहारिकदृष्ट्यैव तादृशः, नतु पारमार्थिकदृष्ट्येत्यद्वैतमतसिद्धान्तोऽपि नानुपपन्नः। अधिकं चात्राद्वैतसिद्ध्यादौ व्यक्तमित्यलमतिविस्तरेण ॥१०॥

## [११] अद्वैतमत एव प्राणमयादिपर्यायसार्थक्यम् ॥

"ब्रह्मविदाप्नोति परमि"ति श्रुतौ हि ज्ञेयं प्राप्यं च ब्रह्मैकविधमेव निर्दिष्टम्, नानेकविधम्। अत एव परमिति परशब्दप्रयोग उपपद्यते। मतान्तरे ह्यनिरुद्धादिप्राप्तेः परप्राप्तिरूपत्वात् न परशब्दप्रयोगस्वारस्यमुपपद्यते। तथान्नमयादिवाक्यैरपि परप्राप्तिसाधनब्रह्मज्ञानमेव विवक्षितमिति यदि भवतां संमतं तर्हि अन्नमयवाक्येन प्राणमयवाक्येन सर्वेणापि परप्राप्तिसाधनज्ञानविषयो ब्रह्मैव विवक्षितमित्यन्नमयपर्यायेणैव गतार्थत्वात् प्राणमयादिपर्यायो व्यर्थ एव संपद्यते ॥

अस्तुवा कथमपि ज्ञेयं ब्रह्मैकमेव सर्वैरपि पर्यायैः समर्प्यत इति, एवमपि परमित्येकवचनेन मुख्यप्राप्यतया विवक्षितमेक-

SGDF
Sri Gangeshwari Digital Foundation

मेव किमिति "अन्नमयमुपसंक्रामति" "प्राणमयमुपसंक्रामती"ति पर्यायपंचकेन निर्दिश्यते? एतेन—फलाध्यायोक्तो मोक्षः चतुर्विध इति चतुर्विधमोक्षस्वरूपनिरूपणमेवात्र क्रियत इति प्रकाशप्रसरोक्तम्—अपास्तम्। नह्यत्र चतुर्विधोऽपि मोक्षः परमित्येकवचनेनोपपादनीयत्वेन प्राप्तः। प्रकाशप्रसरकारा अपि हि अन्नमयप्राप्तिरेव परमप्राप्तिरिति नोरीकुर्वन्त्येव, यतः तां प्रधानपरप्राप्तिरूपसालोक्यादिद्वारमेव तेऽपि मन्यन्ते। तथाच परप्राप्तिसाधनत्वं केवलान्नमयब्रह्मावगमस्य न संभवति, नवाऽन्नमयप्राप्तिरेव मोक्ष इति च तेषामपि वर्णनीयमिति परप्राप्तिसाधनब्रह्मज्ञानसमर्पकत्वं स्वातंत्र्येण सर्वेषामन्नमयादिवाक्यानां कथं संभवतीत्यन्नमयादिपञ्चब्रह्मतावादोऽसंभदुक्तिक एव। अन्यथाऽऽन्नमयवाक्येनैव मुख्यपरप्राप्तेरपि भवतां वर्णने "प्राणमयमुपसंक्रमती"ति व्यर्थमेव समापद्यते। तदिदमभिप्रेत्यैव खण्डनकाराः—"ब्रह्मविदाप्नोति परमि"ति श्रुत्युक्तब्रह्मप्राप्तिरूपमोक्षस्यै"तमन्नमयमात्मानमुपसंक्रम्ये"त्यन्नमयोपसंक्रमणेनैव सिद्धतया प्राणमयाद्युपसंक्रमणकथनानुपपत्तेरि"त्यादि—वर्णयन्ति॥

यत्तु प्रकाशप्रसरकारैः—तत्त्ववादिसिद्धान्ताज्ञानविजृंभितमिति वर्णितम्, तदिदमेतेन खण्डनाशयानवबोधविजृंभितमितिसूचितम्॥

अयं भावः—चतुर्विधमोक्षवादिनामपि भवतां ब्रह्माण्डबहिरावरणगतपृथिव्याद्यावरणगतहरिरेव प्राप्यतया विवक्षित इत्यत्र तु न विवादः। तथाच भोगरूपमोक्ष एव परप्राप्तिरिति भवताम-

SGDF Sri Gurgeshwari Digital Foundation

पि संमतम् । तत्रच परपदाभिधेयसर्वकामाप्तिरूपो मोक्षोऽव्यक्ततत्त्वान्तर्गतनारायणप्राप्त्यनन्तरमेव भवतीति भवतां विवक्षितं वा नवा । आद्येऽन्नमयादिप्राप्तिर्न परप्राप्तिः । द्वितीयेऽन्नमयप्राप्त्यैवान्तर्बहिश्च मोदनाख्यपरप्राप्तिरानन्दमयप्राप्तिश्च यद्येका, तर्हि किमिति प्राणमयाद्युपसंक्रमणमत्र क्रियते ? कथं चात्र तारतम्यमपि भवदभिमतमुपपादयितुं शक्यते ?

वस्तुतस्तु—आनन्दमयप्राप्तिरपि न भवतां परप्राप्तिः, किन्तु तदुत्तरं सर्वविनाशेन प्रधानतत्त्वावशेषानन्तरं ब्रह्मणा सह विरजास्नानेन लिङ्गत्यागानन्तरं भगवत्सालोक्यादिप्राप्तिरेव । तदुक्तं प्रकाशप्रसरे—ततश्च सर्वविनाशे प्रधानतत्त्वमेवावशिष्यते । ततः परं तस्मात् बहिर्निर्गत्य ब्रह्मणा सह विरजास्नानेन त्यक्तलिंगो भवति । एवं सर्वज्ञानिनां प्रकृतिबन्धध्वंसान्तो मोक्षविशेषो ज्ञानेन भवतीत्युक्त्वा तदनन्तरभाविनी वासुदेवप्रवेशरूपा तदनन्तरभाविनी सालोक्यादिरूपा मुक्तिरिति । तथाच "ब्रह्मविदाप्नोति परम्"इत्यत्रापि तादृशमोक्षस्यैव परप्राप्तिपदेन विवक्षणस्य युक्तत्वादन्नमयादिप्राप्तेरविवक्षणीयत्वादन्नमयोपसंक्रमणादिकं वर्ण्यमानमुपसंक्रमणीयस्यान्नमयादेरपरस्य परब्रह्मत्वाभावं स्पष्टमेव गमयतीति कथं वाऽन्नमयादिपञ्चब्रह्मतावाद उपपद्यते ? एतेन—उपसंक्रमणीयत्वं ब्रह्मलिङ्गमित्यपि—परास्तम्, अन्यथाऽर्चिरादिमार्गगतमासपक्षादीनामपि ब्रह्मतापत्तेरिति सिद्धम् ॥

तदयं निष्कर्षः—अन्नमयप्राप्तिर्यदि द्वारम्, तर्हि नान्नमयादेर्ब्रह्मत्वमर्चिरादेरिव । यदि तु सालोक्यादिरूपपरप्राप्तिः, तर्हि

SGDF
Sri Gangeshwari Digital Foundation

"प्राणमयमुपसंक्रमती"त्यादिवैयर्थ्यमिति खण्डनकारनिरासः पंचब्रह्मताविषय उपपन्न एवेत्यलमतिविस्तरेण ॥१२॥

## [१३] मतन्तारेऽन्योन्तरआत्मे सात्यनुपपत्तिः ॥

नह्यन्नमयादिब्रह्मत्वेऽन्योन्तर आत्मेत्यन्यत्वव्यपदेश उपपद्यते। नहि तद्भिन्नं तद् भवति; "एको देव"इति श्रुतिविरोधोऽपि पञ्चब्रह्मतावादेऽपरिहरणीयः। यदत्र चन्द्रिकायां विशेषबलादुक्तव्यपदेशोपपत्तिरिति वर्णितम्, तदिदं पूर्वमेव भेदप्रतिनिधेर्विशेषस्य कल्पनमप्रामाणिकमिति निरूपितमिति नात्र पिष्टपेषणार्थं प्रवर्तामहे। एतेन—तदेतत् पिष्टपेषणम्; पूर्वं जिज्ञासाधिकरण एव प्रमाणत्रयोपन्यासपूर्वकं वस्तुसामर्थ्यापरपर्यायस्य विशेषस्य समर्थनात्। "अभावो यत्र भेदस्य प्रमाणावसितो भवेत्। विशेषो नाम तत्रैव विशेषव्यवहारभाक्"। इति ब्रह्मतर्कागमादेरुक्तत्वेन तत्र प्रमाणाभाववचनस्योन्मत्तप्रलापत्वाच्चेति—प्रकाशप्रसरोक्तम्—परास्तम्; दत्तोत्तरत्वात्। नहि विशेषानङ्गीकारे सत्यज्ञानादिपदानामपर्यायत्वमापद्यते; प्रवृत्तिनिमित्तभेदेनैव पर्यायत्वोपपत्तेः। नहि वयं सत्यज्ञानादिपदानां भिन्नं शक्यतावच्छेदकमपि नोरीकुर्मः, किन्तु भिन्नप्रवृत्तिनिमित्तकानामेव सतामत्र तद्धर्माविवक्षया स्वरूपमात्रपरत्वमेव लक्षणयेति न दोषः। नहि गङ्गापदेन लक्षणया तीरपदार्थबोधनेन कदाचित्तीरपदेन लक्षणया प्रवाहबोधनेन चोभयोः पर्यायत्वापत्तिः। यथाचैवंधर्मानित्यनेन धर्मभेदोऽपि निषिद्धयमानो नास्माकं विरोधी, तथाऽन्यत्र विस्तृतम्। घटक-

SGDF
Sri Gangeshwari Digital Foundation

लशादिपदानां तु घटत्वमेकमेव शक्यतावच्छेदकमिति नापर्याय-
त्वम् ॥

एतेन—कपालोपादानकत्वं घटत्वं कपालसंयोगासमवायि-
कारणकत्वं कलशत्वमिति वक्तुं शक्यत्वेन धर्मभेदमात्रेणापर्याय-
त्वे घटकलशादिपदानामप्यपर्यायत्वप्रसङ्गात् एवमकाशशब्दाश्र-
यपदयोरपि पर्यायत्वप्रसङ्ग इति प्रकाशप्रसरोक्तम्—अपास्तम्।
घटत्वस्य जातिरूपत्वेन कपालोपादनकत्वादिरूपत्वाभावात्।
आकाशपदस्य शब्दाश्रयपदस्य चाकाशपदस्य शब्दाश्रयत्वविशिष्टे
शक्तिरिति मते पर्यायत्वं संमतमेव। स्वरूपमात्रशक्तमाकाशपद-
मिति मतेतु शब्दाश्रयपदस्य यौगिकस्य स्वरूपमात्रपरत्वाभावान्न
तदापत्तिः। तथाच कंबुग्रीवादिमान् घट इतिवत् शब्दाश्रय आ-
काश इति सहप्रयोगोऽपि नानुपपन्नः। अस्तु वा कथमपि पर्याय-
त्वमेव, एवमपि—वृक्षो महीरुह इतिवत् व्याख्यानव्याख्येयभावेन
सह प्रयोग उपपद्यते। एतेन—आकाशशब्दाश्रयत्वयोरविशेषे
तन्निमित्ताकाशादिपदानां व्याख्येयत्वानुपपत्तेरित्यादि प्रकाशप्रस-
रोक्तम्—अपास्तम्। दृष्टं हि काव्यव्याख्यानादिषु पर्यायशब्देनापि
व्याख्यानमर्थाविशेषेऽपीति पर्यायशब्देन ज्ञातार्थेनाज्ञातार्थस्य
पदान्तरस्य व्याख्यानमुपपन्नमेव ॥

तदयं निष्कर्षः—पर्यायाणां सह प्रयोगो नोपपन्नोऽसति व्या-
ख्यानव्याख्येयभाव इति व्याख्यानव्याख्येयभावेऽवगते पर्यायत्वा-
ङ्गीकारस्यादुष्टत्वेऽपि तदनवगतौ तदङ्गीकारो न युक्त इति सत्य-
ज्ञानादिपदानामपर्यायत्वमुपपन्नमेव। नहि सत्यपदव्याख्यानं

SGDF
Sri Gangeshwar Digital Foundation

ज्ञानपदमिति कस्यापि मतम् । यथाहि विशेषणेनासाधारणस्वरूपावगमः एवमुपलक्षणेनापीति स्वरूपस्यैवोपलक्षणत्वमुपलक्ष्यत्वं चाद्वैतसिद्ध्यादौ व्यवस्थापितमिति "तत्तदसाधारणस्वरूपस्यैव नियामकत्वोपपत्तेरि"ति खण्डनवाक्यमपि नानुपपन्नम् । एतेन—सत्यज्ञानादीनां वस्तुसामर्थ्यरूपविशेषानङ्गीकारे इदमस्यासाधारणं रूपमिति स्वरूपासाधारण्यस्यैवाऽयोगादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम् । यथाच भवतां विशेषो नास्मदीयकाल्पनिकभेदातिरिक्तः संभवति, तथा पूर्वमेव विवेचितमिति नानुपपत्तिलेशोऽपि ॥

एतेन—तस्माद"न्नमयमात्मानमुपसंक्रम्ये"ति भेदव्यपदेशात्—"अन्योऽन्तर आत्मे"ति भेदव्यपदेशाच्चान्नमयादीनामब्रह्मत्वमिति खण्डनोक्तमपि—व्याख्यातम्, "एको देवः" इति श्रुत्यैकत्वेनावगतस्य ब्रह्मणोऽनेकत्वेन निरूपणस्यासंभवात् ॥

यत्तु प्रकाशप्रसरे—क्रमेणान्नमयादिप्राप्तिज्ञानेन इति समर्थितत्वादित्याद्युक्तम्, तदिदमन्नमयादिप्राप्तेरपरप्राप्तेरेव पर्यवसानात् तदब्रह्मत्वपक्षमेव गमयतीत्यहो बालविलसितं यत् स्वदशनैरेव स्वांगुलिदंशनम् । यथाहि भिन्नस्याप्यन्नमयादेरभिन्नत्वं विशेषबलेन; एवं तादृशजीवस्याप्यभेदः कथं न संभवति ? तत्त्वमसीति श्रुतिप्रामाण्यात् । व्यक्तं चेतत् प्रथमाधिकरण एव विवेचितमिति नेह वितन्यते ॥

"अनन्योऽप्यन्यशब्देने"ति वाक्यं तु अनुव्याख्यानगतं न पुराणवचनम्, । खण्डनकारा अपि—तद्वचनस्याप्रसिद्धत्वेनेत्यनेन

SGDF
Sri Gurgeshwari Digital Foundation

पुराणवचनत्वेनाप्रसिद्धत्वेनेत्येव मन्यन्ते । अस्तुवेदं पौराणिकं वचनम् , एवमपीदं वचनं जीवभेदविषयं कथं न भवति ? तथाच- खण्डनकाराणामयमेवाशयः—यदुक्तं पुराणवचनमन्नमयादिपदेनानिरुद्धादिमात्रविषयाकरपरं तेषामेव विशेषबलेन भेदव्यपदेशोपपादनपरं चेति न व्याख्येयम्, किन्तु जीवब्रह्मभेदस्यापि विशेषबलेन व्यवस्थापनपरमित्यूरीकर्तव्यमिति भवदभिप्रायमात्रपरतयोक्तपुराणवचनमप्रसिद्धमिति ॥

एतेन—पुराणवचनस्याप्रसिद्धत्ववर्णनं त्वर्वाचीनस्याल्पविदः सर्वागमशिखामणिभिरशेषेतिहासपुराणविद्भिरुदाहृतवचनस्यापलापो न युक्त इत्यादि प्रकाशप्रसरोक्तम्—परास्तम् । तथा चान्नमयादिब्रह्मतावादो न युक्तः ॥

नारायणोपनिषदि शोधनवाक्येऽप्यन्नमयादीनां परमात्मत्वं ह्यन्यथाऽऽपद्येत । अन्नमयप्राणमयादयो येन क्रमेण ब्रह्मवल्यां वर्तन्ते,त एव नारायणोपनिषदि तेनैव क्रमेणाम्नाता अन्यादृशा इति कल्पनं न संभवति । तथाचैकत्रान्नमयादेर्ब्रह्मत्वमपरत्र कोशपरत्वमिति वैरूप्यप्रसङ्गो भवतामपरिहरणीय एव । एतेन—नारायणानुवाकोक्तान्नमयादयस्त्वस्मन्मतेऽपि कोशा एवेति प्रकाशप्रसरोक्तम्—परास्तम् । यथा ह्यन्नं ब्रह्मेत्यादौ स्थानप्रमाणादन्नादेर्ब्रह्मपरत्वं, समाख्यया चात्र ब्रह्मत्वमेवमत्रापि स्थानात् नारायणानुवाक इति समाख्यया चान्नमयादीनां ब्रह्मत्वमवश्यमेवोरीकर्तव्यम् ॥

यत्तु चन्द्रिकायां—शुद्धिप्रार्थनवाक्ये तु "अथैष ज्योतिरि"

SGDF
Sri Gangadharan Digital Foundation

त्यादाविव संज्ञाभेदात् कुण्डपायिनामयने "मासमग्निहोत्रं जुहोती" त्यादाविव प्रकरणभेदात् शुद्धिप्रार्थनलिङ्गाच्चान्नमयादयो न ब्रह्म, किन्तु कोशा इति वर्णितम्, तदिदमन्नमयप्राणमयादिसंज्ञानां तासामेवात्र वर्तमानत्वात्, नामसादृश्ये प्रकरणभेदेनापूर्वभेदेऽपि धात्वर्थभेदाभावस्यैव परिमलादौ व्यवस्थापनेनान्नमयादिपदार्थ-स्वरूपभेदसाधनासंभवात्, शुद्धिप्रर्थनालिङ्गस्य मयडवगतविका-रित्वाश्लिलिङ्गस्यैवान्यथासिद्धत्वाच्चाप्रयोजकमेव ॥

अयं भावः—नह्यनुपस्थितिमात्रं भेदसाधकं प्रकरणान्तरम्। "यदाहवनीये जुहोती"त्यादौ स्थानेनानुपस्थितावपि विहितहोम-सामान्यविषयतायास्सर्वप्रामाणिकसिद्धाया असांगत्यापत्तेः, किन्तु अनुपादेयगुणविशिष्टानुपस्थितिः प्रकरणान्तरम्। नचात्र तादृश्यनुपस्थितिर्वर्तत इति नान्नमयादयोऽत्र विभिन्ना भवितुमर्ह-न्ति। तदुक्तं खण्डने—अनुपादेयगुणविशिष्टानुपस्थितिरूपप्रकर-णान्तरस्य धात्वर्थभावनामात्रविषयकत्वेनाधात्वर्थभावनारूप-मनोमयादिष्वप्रवृत्तेरिति ॥

एतेन—तत्र यथाग्निहोत्रमासाग्निहोत्रयोः प्रकरणभेदात् भेदः, तथाऽत्रापि शुद्धिप्रार्थनप्रकरणब्रह्मप्रकरणयोर्भेद इत्यर्थस्य विवक्षितत्वेनैतावन्मात्रविषये प्रकरणभेदानुसरणे दोषाभावात्, नहि दृष्टान्तः सर्वसाम्यमादाय क्वापि निर्वोढुं शक्य इत्यादि प्रकाशप्रसरोक्तम्—परास्तम्। नहि मासाग्निहोत्रेऽपि अग्निहोत्र-भेदः, किन्तु भावनाभेद एवेति हि पूर्वमेवोक्तमिति नेदमत्र साव-सरम्। यत्तु मासाग्निहोत्रादीनामप्यतथात्वेन तद्भेदासिद्ध्या

SGDF
Sri Gangeshwari Digital Foundation

भवदुक्तनियमस्य तत्राविवक्षितत्वात् इत्यादि प्रकाशप्रसर उक्तम्, तदिदं प्रकाशप्रसरकाराणां मीमांसागन्धाभावमेव गमयति । मीमांसका हि मासाद्यनुपादेयगुणविशिष्टयैवानुपस्थित्याऽत्रापूर्वभेदादिकं विवक्षन्तीति सर्वविदितमिदम् । अत एव—गृहमेधीयाज्यभागयोः प्राकृतविधानेन तदुत्तरातिदेशप्रतिबन्धादिसिद्धान्तादिकमप्युपपद्यते ।

सर्वथा तु प्रकरणान्तराधिकरणे धात्वर्थभेदाप्रतिपादनात् प्रतिपादनेऽपि प्राकृतधर्मस्यैव तस्यानुवादाङ्गीकारादत्र प्रकरणान्तराद्यधिकरणपर्यालोचनमन्नमयादिब्रह्मत्वमेव साधयेदित्यत्र ,न विशयलेशोऽपि । तथाचैकत्रान्नमयादेः कोशपरत्वमपरत्र ब्रह्मपरत्वमिति वैरूप्यं भवतामपरिहरणीयमेव ।

एतेन—ब्रह्मशब्दाभावात्, ज्ञानिनस्तत्प्राप्तिकथनाभावात् रसशब्देन विशेषणाभावात्,सञ्ज्ञाभेदाच्च न ब्रह्मत्वमिति चन्द्रिकोक्तमपि परास्तम् "स वा एष पुरुषोऽन्नरसमय"इत्यादिवाक्ये ब्रह्मत्वाऽसिद्धिर्हीदानीमपरिहरणीयैव न हि तत्र ब्रह्मशब्दो वर्तते । नवा ज्ञानिनःतत्प्राप्तिकथनं च वर्तते । यत्तु तत्रान्नरसमय इति रसशब्दान्तरं तत्तु"रसो वै स" इति वत् नान्नमयमुद्दिश्य रसत्वविधानपरम्, किन्तु रसशब्दस्याऽन्नशब्दस्येव तद्घटकतामात्रम् । तथाच रसशब्देन विशेषणमपि तत्र नास्त्येव । अस्तु वा कथमपि रसशब्दवत्त्वमात्रेण विशेषः, एवमपि प्राणमयाद्यानन्दमयान्तानां कथमपि न ब्रह्मतासिद्धिः । नहि तत्र प्राणरसमय इत्याद्याम्नानं दृश्यते ।

SGDF
Sri Gangeshwar Digital Foundation

एतेन—अन्नरसमय इत्युपक्रमात् "रसो वै स" इत्युपसंहाराच्च रसशब्दविशेषणस्य पंचस्वप्यभिप्रेतत्वेनैते पञ्चाप्यन्नरसमयः प्राणरसमय इत्यादिरूपेणाद्यन्तयो रसशब्दविशेषिता एवेति चन्द्रिकाप्रकाशवाक्यं प्रकाशप्रसरोक्तिश्च—परास्ता; येन रूपेण रसशब्दोपक्रमस्तेन रूपेणाऽऽनन्दरसमय इति रसशब्दोपसंहाराभावात्, "रसो वै स" इत्यस्य पुच्छब्रह्मविषयस्याऽऽनन्दमयविषयत्वाभावात् सर्वथा प्राणमयादिसंज्ञाघटकताया उपपादयितुमशक्यत्वाच्च प्राणमयादीनामपि रसशब्दविशेषणवर्णनं सर्वथाऽसङ्गतमेव ।

तथाच नात्र संज्ञाभेदोऽपि । अन्यथाऽऽन्नरसमयादिवाक्येऽन्यत् ब्रह्म"न्नमयमुपसंक्रामती"त्यादावन्यत् ब्रह्म विवक्षितमिति कथं भवतां न संभवति ? संज्ञाभेदात् । नहि तत्रापि रसशब्देनोपक्रमोपसंहारौ वर्तेते । तथाच "वसन्ते वसन्ते ज्योतिषा यजेते" त्यत्रेवान्नमयादिक्येऽपि अन्नारसमयस्यैव विवक्षणीयतया कथं शोधनवाक्येऽपि संज्ञाभेदात् नान्नमयादयो परमात्मानो भवितुमर्हन्ति ?

एतेन—शोधनलिङ्गमपि—व्याख्यातम् । "परमात्मा मे शुध्यन्तामि"ति पूर्वतनवाक्ये हि परमात्मनोऽपि शोध्यत्वमाम्नातमिति कथं वा तत् परमात्मताविवक्षाप्रतिबन्धकं स्यात् ? यत्तु अस्माभिर्वृत्तिकारमतनिरासावसरे शोध्यत्वमानन्दमयस्य परमात्मत्वविरोधीति—वर्णितम्, तद्देकवाक्यगतशोध्यत्वमेकजातीयमेव युक्तमित्यभिप्रायमिति न विरोधः ।

SGDF
Sri Gargeshwari Digital Foundation

"प्राणं देवा अनुप्राणन्ति" इत्यादिवाक्यशेषोपपत्तिस्तु प्राणमयपदेन परमात्माऽविवक्षायामप्युपपद्यत एव; सर्वेषां विना प्राणं जीवनस्यासंभवात्। एतेन—प्राणमयं प्रत्युदाहृतश्लोकोक्तसर्वदेवचेष्टकत्वादितत्तल्लक्षणवत्वादिरूपोक्तलिङ्गसमुदायाच्च ब्रह्मत्वसिद्धिरिति प्रकाशप्रसरोक्तम्—अपास्तम्, सर्वदेवादिचेष्टकत्वस्य ब्रह्मलक्षणत्वस्योक्तरीत्या मुख्यप्राणसाधारण्येनायोगात्। तदिदं सिद्धम्—यत् ब्रह्मवल्ल्युक्तान्नमयादयो नारायणानुवाकोक्तान्नमयादय इव न ब्रह्मतामर्हन्ति, अन्यथा तेषामपि ब्रह्मताऽऽपत्तिरिति।

यदत्र प्रकाशप्रसरे खण्डनकाराभिमतभागवतपाठस्य कुपाठत्वादिकमुक्तं तदिदं प्रामाणिकपरिगृहीतस्य पाठविशेषस्य माठरायणाद्यप्रसिद्धश्रुत्यादीनामपि प्रामाण्यमङ्गीकुर्वाणानां न शोभत इत्यलमतिविस्तरेण ॥१४॥

## (१३) अद्वैतिनां स्थूलारुन्धतीन्यायनिर्देशोपपत्तिः

अत्रेयं शंका समुन्मिषति—यद्यन्नमयादयो न ब्रह्म, किमिति तेषामुपदेशोऽत्र क्रियत इति? अत्रेदमद्वैतिनो मन्यन्ते—अतिसूक्ष्मस्यात्मतत्वस्य प्रथममेव बोधयितुमशक्यत्वात् द्वारतया तदुपदेश इति। अत्रेदमद्वैत्यभिमतं निदर्शनं—यथा सूक्ष्मामरुन्धतीं दर्शयितुं स्थूलैव तारा प्रथममरुन्धतीत्युपदिश्यतेऽनन्तरं च नेयमरुन्धती, किन्त्वन्या, नेयमित्युपदेशः क्रियते तथेति॥

अत्र प्रकाशप्रसरकाराः—यत्रेयं स्थूलतारा तन्निकटवर्तिनी अरुन्धतीत्येव परीक्षकाणामुपदेशस्य प्रमितत्वेन दृष्टान्तस्यैवास-

SGDF Sri Gangeshwar Digital Foundation

प्रतिपन्नत्वादिति यद्वर्णयन्ति,तत्रेदमेव वक्तव्यम्-यत् ये प्रथममेवारुन्धतीं प्रदर्शयन्ति न ते परीक्षकाः,किन्तु ये तन्निकटवर्तिनीमेव प्रदर्शयन्ति, ते एव परीक्षका इति कथमिदमवगतमिति? नहि वयमेकैवोपदेशरीतिरिति पश्यामः। तथाच केश्चन परीक्षकैर्भवदभिमतरीत्योपदेशोऽपि केचनास्मदुक्तरीत्योपदेशका अपि प्रामाणिका वर्तन्त इति तदवलम्बेनोक्तदृष्टान्तमद्वैतिनः प्रदर्शयन्तीति न दोषः। इदमुदाहरणं मूषानिषिक्तद्रुतताम्रादेरुपलक्षणमिति, तत्रेदमेव बिंबमिदमेव बिंबमित्येवंक्रमस्यैवोपदेशस्य वर्तमानत्वान्न दोषलेशोऽपीति मन्तव्यम् ॥१३॥

[१४] अद्वैतमत एवान्नमयादिवाक्यसार्थक्यम् ॥

इदमत्र सर्वविदितं यत् प्रकाशप्रसरकारैः—क्रमेणान्नमयादिप्राप्तिर्ज्ञानिन इति समर्थितत्वादिति वदद्भिरन्नमयमुपसंक्रम्येत्यादिकं न मुख्यप्राप्त्योपदेशपरं विवक्षितमिति। तत्रेदं प्रष्टव्यम्-किमित्यन्नमयमुपसंक्रम्येत्यनुपदेशेन साक्षात्परप्राप्तिरेव नोपदिष्टेति? यदि अन्नमयादीनां मार्गत्वात् तदुपदेश इति, तर्हि अर्चिरादिकमपि कथं नोपदिष्टम्। नहि "ब्रह्मविदाप्नोति परमि"त्यत्र मार्गोऽपि प्रतिज्ञातः। तथाच प्रमाणान्तरेण मार्गान्तराणामिवान्नमयादीनामपि प्राप्यानां सिद्धया व्यर्थमिहा "न्नमयमुपसंक्रामती" त्यादिवाक्यम्, अस्मन्मते तु सत्यपि शैल्यन्तरे मूषानिषिक्तद्रुतताम्रदृष्टान्तेन स्थूलारुन्धतीदृष्टान्तेन वाऽऽत्मतत्त्वोपदेशार्थं प्रवृत्तेऽस्मिन् सन्दर्भे अन्नमयाद्युपदेशस्सर्वथा सफलः।

SGDF
Sri Gargeshwari Digital Foundation

संमतमिदं प्रकाशप्रसरकारादीनामपि—यत् अन्नमयप्राणमयादिक्रमेणैव पंचाऽपि कोशा वर्तन्त इति गुहाऽपरपर्यायकोशानां सर्वेषामपि प्रथमत आत्मत्वापदेशपूर्वकमेव ततोऽन्तर इत्यात्मतत्त्वमुपदेष्टुं शक्यते । नहि प्रथमत एव "आनन्दो ब्रह्मे"ति निरूपणे सौषुप्तानन्दातिरिक्तानन्दप्रतीतिः कस्यापि भवेदिति सर्वानन्दाधिष्ठानब्रह्मोपदेशार्थं शरीरादिविवेकेनात्मतत्त्वोपदेशोऽन्नमयादिसर्ववाक्यं विना नोपपद्यते ॥

"सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादि वाक्यविवरणार्थमेव भृगुवल्लीप्रपंच इति मतद्वयेऽपि समानमिति, "सत्यं ज्ञानमि"ति स्वरूपलक्षणलक्षितमेव तटस्थलक्षणद्वारकस्वरूपलक्षणेन समर्प्यते, नतु स्वरूपलक्षणानन्तरं तटस्थलक्षणमात्रं वर्ण्यत इति न दोषः । एतेन—नहि प्रकृष्टप्रकाशश्चन्द्र इत्युक्त्वा शाखाग्रमपि दर्शयन्ति । युगपदेव स्वरूपलक्षणाभिधानद्वारोपदेशयोरदर्शनेन स्वरूपलक्षणमुखेन प्रदर्शनस्थले द्वारोपदेशस्य व्यर्थत्वादित्यादि प्रकाशप्रसरोक्तं—परास्तम् । तैत्तरीयोपनिषदि हि कोशविविक्तात्माभिन्न"स्यत्र विवक्षितमिति तस्यात्मरूपस्य श्रवणमननादिसंस्कृताग्र्यबुद्धिसाक्षात्कारेणैव मोक्षस्य विवक्षितत्वादात्मतत्त्वमपि प्रत्यक्षमेवात्राद्वैतिनो मन्यन्ते, न परोक्षम् । नहि विवरणमतेऽपि शब्देन परोक्षमेवात्मज्ञानं भवतीति सर्वविदितमिदम् । एतेन—चन्द्रादेः प्रत्यक्षेण बोधनीयतया शाखादिकमप्रदर्श्य चन्द्रादिकं न प्रदर्शयितुं शक्यमिति तत्र तस्य द्वारत्वेऽपि ब्रह्मणः शब्दैकगम्यत्वेन मानान्तरायोग्यतया सत्यज्ञानादिवाक्येनैव शुद्धब्रह्मसिद्धि-

SGDF
Sri Gargeshwari Digital Foundation

संभवेन शब्दस्थले द्वारम् प्रतिपाद्यापि प्रकृतार्थबोधनसंभवेनोक्त-सिध्यनन्तरमन्नं ब्रह्मेत्युक्तिरयुक्तेति प्रकाशप्रसरोक्तं—अपास्तम्, यथाहि मूषानिषिक्तद्रुतताम्रादिस्थले ततोऽन्तरस्ततोऽन्य इति च व्यपदेश एव दृश्यते, स्थूलारुन्धतीस्थलेऽपि ततोऽन्याऽरून्धतीत्यपि व्यपदेशो वर्तत एव, नेयमरुन्धती ततोऽन्येति व्यपदेशस्थलेऽपि नेयमरुन्धतीत्यर्थसिद्धकथनमात्रमेव । तथाचात्रान्नं न ब्रह्मेत्यनुक्तेऽपि ततोऽन्य इत्युक्तिमात्रेणापि न दृष्टान्तवैषम्यम् । एतेन—पश्चान्नेयमरुन्धतीत्यादिवदन्नं न ब्रह्मे निषेधवचनादर्शनेन तन्न्यायानुसरणस्याशक्यत्वादिति प्रकाशप्रसरोक्तम्—परास्तम् ।

क्रमिकेषु चान्नमयादिषु कोशेषु एकतरपरित्यागेऽन्यमात्रग्रहणे वा न शरीरादिविवेकः सिद्धयति । तथाच पूर्वपूर्ववर्णानुरक्तान्तिमवर्णोक्तेरिवान्नमयादेरवचने न शरीरादिविविक्तात्मस्वरूपाभिन्नब्रह्मस्वरूपं वक्तुं शक्यत इति न कस्यापि वैयर्थ्यम् । एतेन—पूर्वपूर्ववर्णानुरक्तान्तिमवर्णोक्तिरिवान्नमयादेरवचने ब्रह्म वक्तुमशक्यमिति पक्ष एव "नचान्नं ब्रह्मेत्यनुक्त्वाऽऽनन्दो ब्रह्मेति वक्तुमशक्यमि"ति चन्द्रिकायाः प्रवृत्तत्वादित्यादि प्रकाशप्रसरोक्तमपि—परास्तम् ।

सर्वथा त्वन्नमयाद्यब्रह्मत्वेऽपि तदुपदेशसार्थक्यमस्मन्मत एव संभवति न भवन्मते । संमतमिदं मतद्वयेऽपि—"अन्योऽन्तर आत्मा प्राणमयः" "प्राणं ब्रह्मेति व्यजानात् ।" "प्राणमयमुपसंक्रम्ये"त्यादीनामेकार्थत्वमिति, "अन्योऽन्तर आत्मे"ति ब्रह्मवल्ल्यामन्यत्वनिर्देशो भृगुवल्ल्यामप्यनुसन्धेय एवेति न दोषइति सर्वमनवद्यम् ॥ १४ ॥



SGDF
Sri Gargeshwari Digital Foundation

## [ १५ ] अन्नमयादिवाक्यस्य भ्रान्तिसिद्धानुवादमात्रत्वम्

अयमत्राद्वैतिनामागमः—यत् "सत्यं ज्ञानमनन्तं ब्रह्मयो वेद निहितं गुहायां परमे व्योमन्नि"ति गुहानिहितत्वेन ब्रह्मज्ञानं यत् प्रतिपादितम्, तत्र गुहापदार्थः शरीरादिकमेव, न पृथिव्याद्यावरणमिति बोधनार्थमेव "तस्माद्वेत्या"दि संदर्भः प्रवृत्त इति। तत्र चाहं गच्छामि लंघयामीत्याद्यनुभवविशेषशालिनं पुरुषमुद्दिश्य न द्रागित्येव शरीरादिगुहात्वनिरूपणं कर्तुं शक्यमिति तदनुभवानुसारेणात्मतत्त्वोपदेशमुपक्रम्य ततोऽन्योऽन्तरश्चेत्युपदेशशैल्या शरीरादिगुहात्वमर्थसिद्धं भवति, सर्वाधिष्ठानस्वरूपचैतन्यं ब्रह्मस्वरूपमिति च बोधितं भवति। न चेदं प्रथमत एव स्वभावसिद्धभ्रान्त्यनुवादं विना कर्तुं शक्यमिति स्वभावप्राप्तभ्रान्त्यनुवाद एवात्रनिषेधार्थं क्रियते नात्र शरीराद्यात्मत्वमेकान्ततयोपदिश्यते। एतेन—सत्यं ज्ञानमिति स्वरूपलक्षणेन ब्रह्मोपदिश्य तस्य कोशरूपताभ्रान्तिमुत्पाद्य पुनः पुच्छवाक्येन तदुपदेशायोग इति चन्द्रकोक्तमनुक्तोपालंभनमेवेति—सूचितम्। नह्यत्र भ्रान्तिरुत्पाद्यते, किन्तु स्वतः सिद्धभ्रान्त्यनुवाद एवेति खल्वद्वैतिनां संप्रदायः। तदुक्तं खण्डने सत्यं ज्ञानमित्येतद्विना ब्रह्मज्ञानेऽपि तस्य कोशाधारत्वेन ज्ञानार्थं देहादिरूपोक्तिपूर्वकं तदाधारतयोपदेशस्यावश्यकत्वादि"ति। एतेन—कोशरूपताभ्रान्त्युत्पादनं विनाऽपि तदाधारताया व्युत्पादयितुं

SGDF
Sri Gargeshwari Digital Foundation

क्यत्वाच्च। नहि कुण्डो बदर इत्युक्त्वा कुण्डे बदर इति व्यवहरन्ति परीक्षका इत्यादि प्रकाशप्रसरोक्तमप्यनुक्तोपालंभनमेवेति—सूचितम्। नहि देहतात्म्यमेवात्मनो जानतां द्रागित्येव देहाद्यात्मत्वोपदेशः संभवतीति कुण्डबदरदृष्टान्तवैषम्यं तत्र सर्वविदितमेव। यतो हि भ्रान्तिसिद्धार्थानुवाद एवाग्निर्हिमस्य भेषजमितिवदत्र क्रियते, न शरीरात्मत्वमज्ञातमुपदिश्यते। अतएव शरीरात्मत्वसिद्धान्तव्यवस्थापनपरं चार्वाकमतमपि न श्रौतमिति सिद्धान्त उपपद्यते। तथाच मोक्षसाधनात्मतत्त्वज्ञानस्यान्नमयादिवाक्येऽद्वैतिभिरप्य विवक्षितत्वान्न दोषः।

गुहानिहितमित्यत्र हि गुहानिहितत्वं न तदाधेयत्वरूपम्, किन्तु तदधिष्ठानत्वरूपमिति बोधयितुमेव"ब्रह्म पुच्छं प्रतिष्ठे"ति प्रतिष्ठापदप्रयोग इति कोशाधारपदेन कोशाधिष्ठानमेव खण्डनकारा मन्यन्ते। कोशाधिष्ठानं च स्वरूपचैतन्यमात्रमेव;तस्यैव सर्वाधिष्ठानत्वात्। एतेन—त्वन्मते निर्विकल्पकज्ञानस्यैन मोचकत्वेनोक्तविशिष्टज्ञानस्य ब्रह्मप्राप्त्यप्रयोजकत्वेन निर्विशेषत्वप्रतिकूलत्वादित्यादि प्रकाशप्रसरोक्तम्--परास्तम्। अद्वैतिनो हि कारणवाक्यानामानन्दवाक्यैकवाक्यतयैव पर्यवसानं मन्यन्त इति "सत्यं ज्ञानमित्यनन्तरमपि लक्षणवाक्यं नानुचितमिति पूर्वमेव विवेचितम्। एतेन—सत्यं ज्ञानमिति स्वरूपलक्षणेनैव ब्रह्मज्ञानस्य सिद्धत्वेनान्नमयाद्युपदेशस्य तदर्थत्वायोगादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम्;अन्नमयादिवाक्यानां गुहातन्निहितस्वरूपसमर्पणार्थत्वस्यैवोरीकरणेनादोषादिति सर्वमनवद्यम्॥१५॥

SGDF
Sri Gargeshwari Digital Foundation

## [१६] कोशानां प्रत्यग्रूपप्रवणतोपयोगित्वम् ॥

यत्तु पुनरद्वैतिनो मन्यन्ते—कोशानां पराक्त्वात् तैः प्रत्यग्रूपे ब्रह्मणि चित्तप्रावण्यं संपाद्यत इति, तस्यायमाशयः—शरीरादिविविक्तात्मस्वरूपसमर्पणं लोकसिद्धशरीरात्मत्वाद्यनुवादपूर्वकमेव क्रियते। नहि द्रागित्येव शरीराद्यात्मताभ्रमोऽपनोदितुं शक्यते। अज्ञा हि कदाचित् शरीरं कदाचिन्मन इत्येवमनेकरूपमपरिनिष्ठितं चात्मानं जानन्तीति बुद्धेरेकैकत्र प्रवणतासंपादनमुखेनान्ततः प्रत्यग्रूपं परिनिष्ठितं बोधयितुं शक्यते, नान्यथेति। शरीरप्राणाद्यात्मत्वभ्रमेषु बहुष्वनुभवसिद्धेष्वेवैकैकत्र चित्तप्रवणता श्रुत्या क्रियते पूर्वपूर्वस्य कोशताप्रतिपत्तिमुखेनेति। नचेदं प्रावण्यं समानजातीयानामेवोपदेशनेन संभवति। नहि प्रत्यग्रूपब्रह्मसजातीयं द्वितीयं वस्तु प्रसिद्धमस्ति। नहि भवन्तोऽपि अन्नमयादिवाक्यं ये द्वारमिति न मन्यन्ते, आनन्दमयप्रावण्यार्थमन्नमयाद्युपदेश इति मन्यन्ते॥ येन केनापि साजात्यंतु पराचामपि प्रत्यग्रूपेण ब्रह्मणा संभवत्येव। नहि समानजातीयेनैवोपदिष्टेन चित्तप्रवणता कुत्राप्यन्यत्र दृष्टा। अस्तित्वात्मत्वेन साम्यं शरीरादिप्रत्यगर्थयोरपि। इयान् विशेषः—पराच्यारोपितमात्मत्वं प्रत्यगर्थे स्वाभाविकमिति, नहीतरनिषेधमुखेन चित्तप्रवणता यत्र क्रियते, तत्र सर्वात्मना साम्यं संभवति। एतेन—असमानजातीयस्यैव तत्प्रावण्यार्थमुपदेष्टव्यतया प्रत्यगर्थे ब्रह्मणि चित्त-

SGDF
Sri Gargeshwari Digital Foundation

प्रावण्यार्थमप्रत्यगर्थस्योपदेशनायोगेन प्रसिद्धपदार्थान्तरस्यैवोपदेष्टव्यत्वादतथाभूतकोशोपदेशो भवोपदेशेनाभावे चित्तप्रावण्यापत्त्या न युक्त इति चन्द्रिकाभिप्रेतार्थ इत्यादि प्रकाशप्रसरोक्तम्—परास्तम्। दृष्टं हि भावान्तरोपदेशेन भावान्तराभावज्ञानमपि। प्रसिद्धं हि सर्वेषामिदं यदापणे लवणाभावतिप्रपादनार्थं सूपोऽस्तीति व्यपदिश्यत इति॥ एतेन—सजातीयोपदेशस्य सजातीये चित्तप्रावण्यहेतुत्वदर्शनादिति प्रकाशप्रसरोक्तमपि—परास्तम्॥

वस्तुतस्तु—भृगुवल्ल्यां जगत्कारणत्वमिवात्र ब्रह्मवल्ल्यामन्नमयादि तटस्थलक्षणं प्रत्यगर्थभिन्नमेव युक्तमुपदेष्टुम्। नहि तदेव तत्तटस्थलक्षणं भवितुमर्हति। तथाच शाखाग्रवाक्यं यथा चन्द्रे चित्तप्रावण्यसंपादनार्थमेवमन्नमयादिवाक्यमपीति समानजातीयेनैव चित्तप्रवणतासंपादनमिति रिक्तमिदं वचः। तदिदमभिप्रेत्यैव खण्डने—नहि पृथिव्या पृथिवी लक्ष्यते, किन्तु तद्भिन्नेन गन्धेन, तथा पराग्रूपेण प्रत्यगुपलक्षणावश्यकत्वादिति। चित्तप्रावण्यं हि नाम निश्चयात्मकतद्ज्ञानजननमेव। तटस्थलक्षणेनापि लक्ष्यविनिर्णय इतरव्यावृत्त्यादिरूपेण भवत्येव। एतेन—आनन्दमयपर्यायोऽपि—व्याख्यातः। तत्रापि तटस्थलक्षणताया एव विवक्षितत्वात्। एतेन—आनन्दमये उत्तरानुवाकोक्तान्नादौ च ब्रह्मशब्दाश्रवणेन "येन्नं ब्रह्मोपासते"इतिवत् ब्रह्मोपासनाया अश्रवणाच्च प्रत्यक्त्वेनाऽऽरोपस्याप्यसंभवादिति प्रकाशप्रसरोक्तमपि—परास्तम्। "स वा एष पुरुष"इति तच्छब्दस्य सर्वत्रानुषङ्गेनानन्दमयेऽपि ब्रह्मारोपस्य संभवात् "अन्नं ब्रह्मेति व्यजानादि"त्यादौ

SGDF
Sri Gargeshwari Digital Foundation

हि स्पष्टमेव ब्रह्मशब्दश्रवणमनानं वर्तत इति न किंचिदनुपपन्नम्। सर्वथा तु नान्नमयादिब्रह्मता प्रकाशप्रसरकाराद्यभिप्रेता सिध्यतीत्यलमतिविस्तरेण ॥१६॥

## [१७] भृगुवल्लीसाम्येनानन्दमयब्रह्मतानिरासः ॥

यत्तु चन्द्रिकायां—भृगुवल्ल्यां पञ्चमस्थान"आनन्दो ब्रह्मेति व्यजानादि"त्यस्यानन्दस्य ब्रह्मत्ववदत्राप्यानन्दमयस्य ब्रह्मत्वमिति वर्णितम्, तत्र खण्डनकारा एवं वर्णयन्ति—शुद्धिवाक्येऽपि पंचमस्थानत्वसाम्यादानन्दमयस्य ब्रह्मत्वापत्तेः। तत्राशुद्धिसम्बन्धादब्रह्मत्वेऽत्रापि प्रियाद्यवयवशयोगादब्रह्मत्वमिति ॥

अयं भावः—"अधीहि भगवो ब्रह्मेति। तं होवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमि"ति। वाक्ये ब्रह्मशब्दानुषङ्गेनैव वाक्यार्थो वर्णनीयः; अन्यथा प्रश्नोत्तरयोरेकविषयत्वानुपपत्तेः। तथाच ब्रह्मशब्दश्रवणेनान्नादिषुब्रह्मत्वारोपो नासंभवी। एतेन-चन्द्रिकायां पूर्वमुत्तरानुवाकोक्तान्नादिषु —"अन्नं प्राणं चक्षुरि" त्यत्र ब्रह्मशब्दाश्रवणादन्नादिषु प्रत्यक्त्वारोपो न संभवतीत्युक्ते तदुपर्युत्तरानुवाकोक्तानामन्नादीनामन्नमयादित्वादन्नमयादौ ब्रह्मशब्दश्रवणमेवान्नादौ श्रवणं तयोरभेदादिति शंकित इति प्रकाशप्रसरोक्तम्—अपास्तम्; पूर्वोक्तप्रकारेण ब्रह्मशब्दानुषङ्गेनैवेष्टसिद्धयोक्त शंकाया एवानुदयात् ॥

वस्तुतस्तु—अन्नमयादौ ब्रह्मपदश्रवणं "येन्नं ब्रह्मोपासते" इत्युपासनाविध्यनुसारेणारोपार्थमित्युक्तशंकाऽनुसारेऽपि आनन्द-

SGDF
Sri Gargeshwari Digital Foundation

मयब्रह्मतापादनं न संभवति। नह्यानन्दमयानन्दयोरपि वयमन्नान्नमययोरिवाभेदं स्वीकुर्मः ; आनन्दमयस्योपास्यत्वात्, आनन्दस्य च ज्ञेयत्वात्। एतेन—"येऽन्नं ब्रह्मोपासते" इति वत् "य आनन्दं ब्रह्मोपासते" इत्यानन्दमयपर्यायश्लोकाप्रवृत्तावपि निमित्तं—सूचितम्। अन्यथा "ऽऽनन्दो ब्रह्मेति" वाक्येऽपि आरोपितब्रह्मप्रतिपत्तिः स्यादिति। तथाचान्नमयादौ ब्रह्मत्वारोपवत् अन्नादावपि ब्रह्मत्वमारोपितमित्यत्र न यथासंख्याम्नानं गमकम्, किन्तु अन्नमयादिपर्यायेष्वेवा"न्नं ब्रह्मोपासते" "प्राणं ब्रह्मोपासते विज्ञानं ब्रह्म चेद्वेदे"ति ब्रह्मोपासनाविधिरेव। नचानन्दमयब्रह्मोपासनं तत्र विहितमित्यानन्दो ब्रह्मेति वाक्यस्य नोपास्यब्रह्मविषयकतेति न दोषः॥

एतेन—यथासंख्याम्नानरूपपाठसादेश्यात्मकस्थानप्रमाणात् आनन्दोऽपि न ब्रह्मेति प्रकाशप्रसरोक्तम्—अपास्तम्। नह्यन्नमयादीनामिव प्रियादिशिरस्कानन्दमयस्याप्युपास्यत्वम्। पुच्छब्रह्मवत्त्वं ह्यानन्दमयस्य तद्व्यतिरेकेणाभावरूपमिति नात्र विशिष्टोपासनं संभवति। तदयं निष्कर्षः—अन्नमयादिवाक्येऽन्नमयादीनां तटस्थलक्षणत्वमन्नादीनामुपास्यत्वं च विवक्षितम्। आनन्दमयवाक्येतु आनन्दमयस्य तटस्थलक्षणत्वमेव, नानन्दोपास्यत्वमिति। तथाच पूर्वं कार्यमुखेन तटस्थलक्षणेन ब्रह्म लिलक्षयिषितमत्रतु कारणमुखेन तटस्थलक्षणेनेति विषयभेदात् नान्नान्नमयादीनामभेदमत्र वयमूरीकुर्म इत्यानन्दमयाब्रह्मतायामानन्दस्याप्यब्रह्मता केवलं पंचमस्थानत्वमात्रेणैव भवद्भिः साधनीया, तदिदं

SGDF
Sri Gargeshwari Digital Foundation

च भवतां नारायणानुवाकस्थानन्दमयस्यापि ब्रह्मतापादकं भवति । कारणान्तरेण तत्राब्रह्मत्वनिर्णयेऽस्माभिरपि आनन्दमयस्य कारणान्तरेणाब्रह्मत्वनिर्णय उपपादयितुं शक्यत इत्यानन्दब्रह्मताया-मानन्दमयब्रह्मतापादानमनवसरमेव ॥

एतेन—तत्रैवात्राप्यन्नादीनामन्नमयादीनां च पंचत्वेन यथा-संख्यमानन्दमयस्थान आनन्दस्य मध्यपतितत्वेन तयोरैक्यापत्त्या-ऽनन्दमयवानानन्दोप्यब्रह्म स्यादिति चन्द्रिकोक्तदोषस्यानेनापरिहा-रेणेत्यादि प्रकाशप्रसरोक्तं—परास्तम्; सत्यपि पंचत्वे नारायणा-नुवाकोक्तान्नमयादीनां सर्वेषामब्रह्मत्ववत् अत्राप्यनन्दमात्राब्रह्म-ताया अप्युपपन्नत्वात्। नहि पंचत्वसंख्यासाम्यमात्रेण विषयै-क्यं भवतामपि संभवति । तथाचान्नमयादिशब्दसाम्ये पंचत्व-संख्यासाम्ये च द्वितयेऽपि वर्तमाने यथा भवतां यद्यन्नमयादिब्रह्म-ता नारायणानुवाके न समंता, तर्हि कथं वा मयडन्त शब्दा-भावेन सर्वत्र एकरूपाणामेव पंचानां ग्रहणं स्यादिति भवन्त एव विवेचयन्त्विति सर्वमनवद्यम् ॥१७॥

## (१८) अन्नमयादिद्वारकब्रह्मोपदेशोपपत्तिः ॥

नहि वयमज्ञातं ब्रह्म प्रति अन्नमयादिद्वारकतदुपदेश एव युक्त इति वदामः, किन्तु प्रकारान्तरे सत्यपि सौकर्यातिशयार्थं जीवाभेदोपपादनार्थं च तत्प्रकार आदृत इति । एतेन—अज्ञातधर्म-तत्त्वं प्रति चैत्यवन्दनं धर्म इत्युपदिश्य ज्योतिष्टोमो धर्म इत्युपदे-शादर्शनादिति चन्द्रिका—परास्ता; नहि धर्मो ब्रह्मेव गुहानिहितं

SGDF
Sri Gurgeshwari Digital Forum

यत्किंचिन्निहिततया कुत्रापि प्रतिपादितम् , नवा साक्षात्करणीयः। तदुक्तं खण्डने—धर्मस्य ब्रह्मण इव दुर्ज्ञानत्वाभावेन तथोपदेशाभाव इति। नहि धर्म इव ब्रह्म न्यायमात्रसमधिगम्यम्। अत एव निदिध्यासनविधिरुपपद्यते। एतेन—धर्मस्य दुर्ज्ञानत्वाभावे पूर्वतन्त्रे तद्विचारवैकल्यापत्तेरिति प्रकाशप्रसरोक्तम्--अपास्तम्। नहि पूर्वतन्त्रमिवोपनिषदपि न्यायनिर्णयरूपा। तथाच साक्षात्करणीयत्वात् सूक्ष्मस्य ब्रह्मणः स्थूलारुन्धत्यादिन्यायेन शरीरादिब्रह्मत्वोपदेशोऽप्यतादृशधर्मस्वरूपविवेचनार्थं नान्यधर्मत्वोपदेशादिकमत्रापेक्षितमिति सिद्धम्।

एतेन—चैत्यवन्दनं धर्म इत्युपदिश्य ज्योतिष्टोमो धर्म इत्युपदेशः पूर्वकाण्डेऽपि स्यात् इति प्रकाशप्रसरोक्तम्—अपास्तम्॥

वस्तुतस्तु—पूर्वकाण्डेऽपि—जर्तिलयवाग्वा वा जुहोति गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यानथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च पयसाऽग्निहोत्रं जुहोती"त्यत्र पयोधर्मत्वव्यवस्थापनार्थं भ्रान्तिकल्पितं जर्तिलयवाग्वादिधर्मत्वमप्युपदिष्टं वर्तत एवेति न दोषः। तथाच तत्र यथा"ऽनाहुतिर्वै" इति निषेधानन्तरं पूर्वमवगतमपि धर्मत्वं परित्यज्यते, एवमत्रापि अन्योऽन्तरआत्मेत्युत्तरवाक्यानुसारेणान्नमयादिब्रह्मत्वं परित्यक्तव्यमेवेति सिद्धमित्यलमतिविस्तरेण। यथाच जर्तिलवाक्यं पयोवाक्यशेषः, एवमन्नमयादिवाक्यमप्युत्तरोत्तरस्य शेष एवेति न दोष इति सर्वमनवद्यम् ॥१६॥

---

SGDF
Sri Gargeshwari Digital Foundation

## [१९] एकविज्ञानार्थमनेकद्वारोपदेशोपपत्तिः ॥

अन्नं प्राणोपलक्षणं प्राणो मनउपलक्षणं तद्विज्ञानोपलक्षणं तदानन्दोपलक्षणमानन्दस्तु स्वोपलक्षणमित्यद्वैतिनो मन्यन्ते। "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"त्यानन्द-वाक्यानन्तरं "परमे व्योमन्नि"त्येकवचनेनोपसंहारोऽप्यत एवोपप-द्यते। अन्यथाऽन्नादिब्रह्मताया अपि विवक्षणे "परमे व्योमन्नि"ति निरतिशयब्रह्ममात्रपर्यवसानमसङ्गतं स्यात्। अत्र हि—"य-देष आकाश आनन्दो न स्यादि"ति वाक्यार्थानन्दस्वरूपमेव विव-क्ष्यत इति स्पष्टमेव प्रत्यभिज्ञायते। यथाच तस्य पुच्छब्रह्मविषयक-त्वमेव तथा पूर्वमेव विवेचितम्। परमते-तु आनन्दवाक्यमात्र-स्यैवाकारशावरणान्तर्वर्त्तिनारायणाख्यपरमव्योमपरत्वात् "भा-र्गवी वारुणी विद्ये"ति सर्वस्या अपि भार्गववारुणविद्यायास्तत्र पर्यवसानमवगम्यमानमन्नादीनां सर्वेषां ब्रह्मतावादस्य प्रतिकूलमे-व। तथाचान्नाद्युपलक्षितस्वरूपचैतन्यमेवात्र तात्पर्यविषय इति सिद्धम् ॥

यत्तु चन्द्रिकायां—अन्नादीनां मध्य एकैकस्याप्युपलक्षणत्व-संभवे चतुर्णामुपलक्षत्वोक्त्ययोग इति—वर्णितम्, तदिदं प्राणा-दिभिः सर्वैरेवान्नादिविविक्तस्वरूपोपलक्षणस्य संभवादेकेन तद-संभवादनवसरमेव। इदं हि दूषणं चन्द्रिकायां अन्नादीनां प्राणा-दीन् प्रति प्रत्येकं द्वारत्वं वोत चतुर्णामपि ब्रह्मणि द्वारत्वं वेति

SGDF
Sri Gangadhar Digital Foundation

विकल्प्य द्वितीयपक्ष एव वर्णितम् । तत्रच प्रथमपक्ष एवास्माकं संमत इति नोक्तस्य दूषणस्य प्रसङ्गलेशोऽपि । अस्तु वा द्वितीयोऽपि पक्षोऽस्मत्संमतः, एवमपि शरीरप्राणमनोविज्ञानादिव्यतिरिक्तस्वरूपचैतन्योपदेशः सर्वविवेकं विना नोपपद्यत इति चतुर्णामप्युपलक्षणत्वमवश्यमूरीकरणीयमेव ।—एतेन—"एकद्वारिज्ञानार्थं युगपदनेकद्वारोपदेशायोगात्, शब्दैकसमधिगम्ये ब्रह्मणि मुमुक्षुं देवजातित्वेन सकृदेकद्वारोपदेशेनैव ब्रह्मज्ञानसंपादनयोग्यं भृगुं प्रत्यनेकद्वारवैयर्थ्येऽभिहिते"इत्यादि प्रकाशप्रसरोक्तम्—परास्तम् । नहि द्वारि केवलमन्नविविक्तं; किन्तु अन्नादिचतुष्टयव्यतिरिक्तमिति सकृदुपदेशमात्रेण कस्यापि नोक्तद्वारिविज्ञानं संभवदुक्तिकमपि ॥

अस्तु वा कथमपि कस्यचन देवस्य भृगोर्वाऽन्नोपदेशमात्रेणैकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति विधया चतुष्टयव्यतिरक्तब्रह्मविज्ञानम् । एवमप्युपाख्यायिकादिषु भृग्वादिपदस्योपलक्षणत्वात् भृगुं देवजातिमपि साधारणाज्ञान्तरसदृशं कल्पयित्वैव शास्त्रप्रवृत्तिरित्यङ्गीकाराान्न दोषः । उक्तोपाधिचतुष्टयव्यतिरिक्तविज्ञानर्थं हि न द्वारान्तरोपदेशोऽपेक्षितः । एतेन—यस्य चतुर्भिरपि द्वारिज्ञानं न संजातं तं प्रति द्वारान्तरोपदेशापत्त्या पुरुषमतिवैचित्र्यानुसरणे शास्त्रापर्यवासानप्रसंगेन तदनुसारेण शास्त्रप्रवृत्त्यभावाच्चेति प्रकाशप्रसरोक्तमपि—परास्तम् । तदिदं सिद्धम्—यत्"यस्य पुरुषस्य चतुर्भिरेवोपलक्ष्यज्ञानं तं प्रति चतुर्णामुपलक्षणत्वस्यावश्यकत्वात् पुरुषमतिवैचित्र्यस्य सर्वसिद्धत्वादिति खण्डनोक्तं न कथमप्यचारु भवतीति ॥१६॥

## [२०] कोशोपलक्षणत्वसाफल्यम् ।

कोशानामुपलक्षणत्वं जीवत्वं कल्पितमिति निरूपणार्थम्, कारणत्वस्योपलक्षणत्वं तु ईश्वरत्वस्य कल्पितत्वनिरूपणार्थमित्यद्वैतिनामाशयः। एतेन—कारणत्वस्य ब्रह्मोपलक्षणत्वसंभवे कोशानामप्युपलक्षणत्वोक्तिर्व्यर्थेति चन्द्रिका—परास्ता ।

वस्तुतस्तु—कारणत्वं ब्रह्मणः तटस्थलक्षणमिति वाक्येन कारणतासम्बधेन कार्यं ब्रह्मलक्षणमित्येव विवक्षितमिति "यतो वेति" वाक्येन कार्यसामान्यस्यैव लक्षणत्वे वर्णितेऽपि कार्यविशेषमात्रस्यात्र लक्षणत्ववर्णनं नासङ्गतम्। यस्यहि कार्यसामान्यकारणत्वं नावगतं तस्यापि शरीरादिकारणत्वं पूर्वोक्तप्रकारेण ज्ञातुं शक्यमेवेति शरीरादिलक्षणत्वं न कथमप्यसंभवीति न दोषः। तथाचा"इमानि भूतानि जायन्ते"इति सामान्यतः कार्यसामान्यस्यान्नमयादिवाक्येन कार्यविशेषस्य च लक्षणत्वे वर्णितेऽपि शाखोपसंहारन्यायेन सर्वकार्यलक्षणतापर्यवसानमेव भवतीति न फलभेदः कोऽपीति कारणत्वस्य ब्रह्मलक्षणत्वसंभवे कोशानामुपलक्षणोत्वोक्तिवैयर्थ्यमिति रिक्तमिदं वच इति सिद्धम्।

अस्तु वा वस्तुगत्योभयोरपि भेद एव, एवमपि सर्वकारणत्वमिव शरीरादिकारणत्वमपि ब्रह्मलक्षणमित्यङ्गीकारे न दोषः, लक्षणान्तरस्य लक्षणान्तरादूषकत्वात्। नह्येकस्य लक्षणद्वित-

SGDF
Sri Gangeshwar Digital Foundation

यमसङ्गतम् । तथा च यस्य सर्वकारणत्वेन ब्रह्मलक्षणं शीघ्रं भवति, तं प्रति यतो वेत्यादि वाक्यम्, यस्य शरीरादिकारणत्वमात्रेण ब्रह्मावगतिस्तस्य तु कोशानामुपलक्षणत्वमिति न दोषः । तदिदमुक्तं खण्डने—यस्य कारणत्वेन ब्रह्मलक्षणेन न ज्ञातं तं प्रति कोशानामपि तदुक्तेरावश्यकत्वात् इति । यत्तु प्रकाशप्रसरे—यस्य कोशैरपि ब्रह्मज्ञानं न जातं तं प्रति द्वारान्तरोपदेशापत्त्या शास्त्रापर्यवसानप्रसङ्गादित्युक्तम्, "तदिदं सोऽकामयत बहु स्यां प्रजायेये"ति बहुभवनसंकल्पादेर्लक्षणान्तरस्यापि सत्त्वात् आम्नायस्य गतिं वक्तुं प्रभवामो नाम्नायं पर्यनुयोक्तुमिति न्यायेन यथाशास्त्रमेव लक्षणादिव्यवस्थापनस्य युक्तत्वात् "न शास्त्र परिमाणत्वादि"ति न्यायेन शास्त्राणां परिमितत्वेन शास्त्रान्तर प्रणयनापत्तेरसंभवच्चासंभवदुक्तिकमेव । अस्मन्मते हि "तस्माद्वे"त्याद्यानन्दमयान्तमेकं वाक्यमिति सर्वेणाप्येतेन शरीरादिकारणत्वमेव लक्षणमुपवर्ण्यते, नतु कारणत्वमेकं लक्षणमपरं कोशलक्षणमिति लक्षणद्वितयम् । अनेन चार्थात् गुहातन्निहितत्वयोरप्युपपादनमर्थसिद्धं भवतीति पूर्वमुपपादितमिति न विरोधः । एतेन—त्वन्मते कारणत्वस्य पूर्ववाक्योक्तस्योपलक्षणत्वाङ्गीकारे तत्र च कोशानां द्वारत्वासंभवात् साक्षाद्द्वारित्वस्यापि शास्त्रापर्यवसानेन वैयर्थ्येन च दूषितत्वाच्चेति प्रकाशप्रसरोक्तमस्मन्मतस्वरूपाज्ञानविजृम्भितमिति—सूचितमिति न परोक्तं दूषणमत्रावसरतीत्यलमतिविस्तरेण ॥२०॥

---

SGDF
Sri Gargeshwari Digital Forum

## [ २१ ] अद्वैतमत एव पुनरुपसत्त्युपपत्तिः ॥

"अन्नं ब्रह्मेति व्यजानादि"त्यन्नविज्ञानानन्तरं "पुनरेव वरुणं पितरमुपससारे"तीन्द्रस्येव पुनरुपसत्तिवचनं हि अन्नं न ब्रह्मेति स्पष्टमेवावगमयति। अन्यथा पुनरुपसदनमेव व्यर्थं स्यात्। पुनरुपसत्तिर्हि नान्नं ब्रह्मेति विनिश्चयमेव सूचयति। अत एव हि— "तपसा ब्रह्म विजिज्ञासस्वे"ति वरुणवाक्यानन्तरं "प्राणो ब्रह्मेति व्यजानादि"ति श्रवणमुपपद्यते, नान्नमेव ब्रह्मेति व्यजानादिति। अन्यथाहि पुनरपि तपसाऽन्नं ब्रह्मेतिव्यजानादिति खलु वक्तव्यं स्यात् न "प्राणो ब्रह्मेति व्यजानादि"ति। अयं हि प्राणो ब्रह्मेति व्यजानादित्याद्यन्यान्यब्रह्मतावगमः स्पष्टमेव पूर्वपूर्वेषामन्नप्राणविज्ञानानां न वस्तुतो ब्रह्मत्वमिति गमयति। "आनन्दो ब्रह्मेति व्यजानादि"त्यनन्तरं तु "सैषा भार्गवी वारुणी विद्ये"ति पुनरुपसत्त्यभावावगमादानन्द एव ब्रह्मेति तु स्पष्टसिद्ध एवायमर्थः।

यत्तु चन्द्रिकायां –विरोचनस्येव भृगोरपि —"अन्नं ब्रह्मेति व्यजानादि"त्यब्रह्मणि ब्रह्मोपदेशेन ब्रह्मवेदने पुनर्गुरूपसत्तिदर्शनं विरुद्धमिति वर्णितम्, तदिन्द्रस्येवाविरुद्धमिति पूर्वमेव निरूपितम्। तदुक्तं खण्डने–असुरजातविरोचनस्य द्वारत्वाज्ञानेऽपि देवजातेर्भृगोः पुण्यवशात् द्वारत्वज्ञानात् पुनरुपसत्त्युपपत्तेरिति। एतेन–भृगुर्वरुणोपदिष्टानामन्नादीनां

SGDF
Sri Gangeshwari Digital Foundation

द्वारत्वं न वेत्ति चेत्, विरोचनस्येव पुनरुपसत्त्यभावः, वेत्ति-चे "न्नानं ब्रह्मेति व्यजानादि"त्येव श्रूयेत इति चन्द्रिकाऽपि-परास्ता; "प्राणो ब्रह्मेति व्यजानादि"ति वर्णनेन ह्यर्थसिद्ध एवायमर्थो नान्नं ब्रह्मेति व्यजानादिति न तत्पृथक्श्रवण शाब्दं वयमपेक्षामहे। तथाच नान्नादिब्रह्मता भृगुवल्लीतात्पर्यवि-षय इति सर्वमनवद्यम् ॥ २२ ॥

## [२२] भृगुवल्ल्या आनन्दमात्रपर्यवसानम् ॥

उपपादितमिदं पूर्वमेव किंचिदिव-यत् "सैषा भार्गवी वारुणी विद्या। परमे व्योमन् प्रतिष्ठिते"ति वाक्यमानन्दमात्रब्रह्म-तामेव गमयतीति। तदमुमेवार्थं विस्तरेणात्रोपपादयितुं प्रवर्ता-महे। अत्र परमते भार्गवी वारुणी विद्येति सर्वस्या अपि भार्ग-ववारुणविद्याया परमव्योमपर्यवसानं यत् बोध्यते, तदिदं सर्वस्या अपि प्रत्येकं ब्रह्मपरत्व एव स्वरसम्, एवमपि परमे व्योमन्निति विभागो न सरसः। आकाशावरणान्तर्वर्ति नारायणो यथा पर-मव्योमपदात् स्पष्टमवगम्यते मुक्तप्राप्यः, न तथा पृथिव्याव-रणान्तर्वर्त्यनिरुद्ध प्रद्युम्नादय इति परमे व्योमन्नित्यानन्दमात्रप-र्यवसानमवगम्यमानमन्नादिब्रह्मत्ववादविरोध्येव। प्रतिष्ठितेति पदस्वारस्यमपि न परमते। अन्नादिवाक्यानामपि ब्रह्मपरत्वे प्रत्येकं सर्वत्र प्रतिष्ठाया आवश्यकत्वात् परमे व्योमन्नित्यानन्द-मात्रप्रतिष्ठाऽऽम्नानं हि तेषां न स्वरसमेव। यथा चाद्वैतमते भार्गवी वारुणी विद्येति विभागोऽपि नास्वरसः, अन्नादीनां

SGDF
Sri Gargeshwari Digital Foundation

द्वारत्वाभिप्रायात्, तथा पूर्वमेव विवेचितम्। तदुक्तं खण्डने–"अन्नादिद्वारकमानन्दस्य ब्रह्मत्वेन वारुणविद्यायास्तद्विषयत्वोपपत्तेः" इति। एतेन—ब्रह्मवल्ल्युक्तार्थं संवादितया हीयमाख्यायिका प्रवृत्तेति ब्रह्मवल्ल्युक्तार्थान्नमयादेरेवात्रान्नादिशब्देन ग्रहणमिति तत्रोपसंक्रमणीयत्वस्योपक्रमपरामर्शोपसंहारैर्ब्रह्मत्वावगमादत्रापि ब्रह्मत्वम्, अन्यथा यथा भृगुवल्ल्यामन्नादेरेव श्रवणं तथाऽन्नमयादीन् प्रति श्रुते श्लोकेऽपि ह्यन्नादेरेव ग्रहणे तस्यान्नमयादितोऽन्यत्वप्रसङ्गः। नचेष्टापत्तिः संभवति, तत्र तदुदाहरणस्यासाङ्गत्यप्रसङ्गात्। यस्यान्नादेर्विकारास्ते तत्प्रशंसापरतया तु न सङ्गतिः, मनोमयं प्रत्युदाहृतश्लोके मनः प्रशंसाऽभावेन तत्कल्पनस्यायोगादित्यादि प्रकाशप्रसरोक्तम्—परास्तम्। यथाचान्नं ब्रह्मोपासते इत्यादौ उपासनार्थं केवलान्नस्यापि ग्रहणं तद्विकारतयान्नमयप्रशंसा चोभयं संभवति, तथा पूर्वमेव सूचितमित्यन्नमयादिश्लोकेऽन्नमयभिन्नग्रहणं नास्माकमनिष्टम्। मनोमयपर्यायगतश्लोकेऽपि केवल एव मनःशब्दो मनोमयप्रशंसार्थमूरीकृत इति मयडन्तार्थभिन्न एव श्लोकगतान्नादिपदार्थ इत्यङ्गीकरणीयम्। तत्रान्नादेरुपादानत्वेन शरीरादिना तादात्म्यसूचनार्थमन्नं ब्रह्मेति सामानाधिकरण्यनिर्देशः, मनोमयेतु मनसः साधनस्वभावस्य न मनोमयोपादनत्वं, किन्तु सम्बन्धमात्रमिति सूचनायेव मनसेति तृतीयान्तं पदम्॥

नहि प्रकाशप्रसरकारैरपि तत्रत्यमनः पदेन मनोमयस्य ग्रहणं स्वीकर्तुं शक्यते। नहि मनोमयेन सह "वाचो निवर्तन्ते" इति

SGDF
Sri Gargeshwari Digital Found

विवरणं संगतं भवतीत्यकामैरपि मनसा सहेत्यस्य ब्रह्मणो रूपं विद्वानित्यनेन संबंधं स्वीकृत्य मनोमयात्मकं ब्रह्म विद्वानिति विवरणमेव पूर्वतनप्रायपाठोपपत्त्यर्थं कर्तव्यम् । अन्यथा मनोमयस्यान्नमयादेरिवाननुवादेन श्लोकश्लोक्ययोरेकविषयत्वभङ्गो हि समापद्यते । तथाचास्मन्मतेऽपि मनोरूपब्रह्मण आनन्दमिति आनन्दात्मकब्रह्मोपासनैव मनोमयपर्यायगतश्लोकेऽपि विवक्ष्यत इत्यूरीक्रियत इति न किमपि वैषम्यम् । तथाचा"न्नं ब्रह्मेति व्यजानादि"त्यादीनां ब्रह्मवल्ल्युक्तार्थसंवादित्वमेव न सिद्ध्यति ॥

अतएव—"अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमि"ति प्रकारान्तरेणैव भृगुवल्ल्या उपक्रमोऽप्युपपद्यते । एतेन—प्रकरणवशादत्राप्यन्नादिशब्देनान्नमयादय एवोच्यन्त इति प्रकाशप्रसरोक्तम्—परास्तम् । अस्तु वा कथमप्यन्नमयादय एवान्नादिशब्देन ग्रह्यन्त इति, एवमपि पुनरुपसत्त्यादिना नान्नादिब्रह्मत्वमिति पूर्वमेव विवेचितमिति न दोषः । "शं नो मित्रादिभिर्वाक्यैस्तैरेव हरिमस्तुवत् । मुक्तगीतावसानैश्च स्तुतस्तेन जनार्दनः" इति स्मृतिस्तु नास्माकमपि प्रतिकूला ; यतो वयमपि अन्नं ब्रह्मेत्यादिवाक्य उपास्यं सगुणं ब्रह्मोरीकुर्मः । ब्रह्मपरोपनिषन्मध्यपतितत्वमात्रेण न ब्रह्मता ; भृगुवरुणादीनामपि ब्रह्मत्वापातात् । यथाचान्नमयादीनां न ब्रह्मत्वं तथा पूर्वमेव विवेचितम् । नह्यात्मशब्दमात्रेणान्नमयादिब्रह्मत्वम् ; शरीराद्यवच्छिन्नस्य जीवस्याप्यात्मपदार्थत्वात् । मुक्तप्राप्यत्वं तु नान्नरसमयादिवाक्ये श्रुतमस्ति ॥

एतेन—अन्नमयादीनामब्रह्मत्वं आत्मशब्दमुक्तप्राप्यत्वयोरयोगादिति प्रकाशप्रसरोक्तं—परास्तम् । नह्यस्माकमपि उपसंक्रम्येत्यस्य प्राप्येत्यर्थो न विवक्षितः । तत्रह्येतमन्नमयमित्यादिना समष्टिशरीरहिरण्यगर्भशरीरप्राप्तिरेव विवक्ष्यते, याऽन्नब्रह्मोपासनस्य



SGDF
Sri Gargeshwari Digital Foundation

फलम् । एवमानन्दमयेऽपि समष्टिजीवप्राप्तिरेव विवक्ष्यते । अत एव "सैषाऽऽनन्दस्य मीमांसा भवती"त्यस्य हिरण्यगर्भानन्देनैवोपसंहार उपपद्यते । तथाचास्मन्मतेऽन्नरसमयादिस्थल उपसंक्रमणवाक्ये च नैक एवार्थो विवक्षित इति नान्नमयस्योपसंक्रमणीयत्वं कुत्रापि श्रुतमिति न दोषः । एतेन—अस्माल्लोकात् प्रेत्येत्यनेनैव शरीराख्यान्नमयत्यागस्योक्तत्वेन पौनरुक्त्यापाताच्चेति प्रकाशप्रसरोक्तं--परास्तम् । तथाचान्नं ब्रह्मेत्यादौ नान्नमयस्य ग्रहणम्, ग्रहणेऽपि वा न तस्य ब्रह्मत्वमिति सिद्धम् ॥

यत्तु प्रकाशप्रसरे—अविरुद्धं ह्यन्नादिशब्देनान्नमयादिप्रत्यायनम् ; ज्योतिष्टोमाधिकारे "वसन्ते वसन्ते ज्योतिषा यजेते"त्यत्र हि ज्योतिः शब्दो ज्योतिष्टोमस्य वाचक इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम् । नामैकदेशे नामग्रहणमिति न्यायस्तु रूढपदविषयः, ज्योतिष्टोमपदमपि हि योगरूढमेव । नचान्नमयशब्दस्तादृश इति नात्र प्रवर्तते ।

अस्तुवा कथमपि ग्रहणप्रसक्तिरेवमपि पूर्वोक्तप्रकारेण प्रकरणविच्छेदा"दथैव ज्योति"रित्यादाविव नामैकदेशे नामग्रहणन्यायो नात्र क्रमत इति । तथाच भृगुवल्ल्यामनन्दशब्देनानन्दमयस्यानभिहितत्वादानन्दस्यैव ब्रह्मत्वविधात्री वारुणी विद्येति खण्डनसिद्धान्त उपपन्न एव । यथाच नान्नादिब्रह्मत्वे किमपि साधकं बाधकानि च बहूनि तथा पूर्वमेव विवेचितानि । एतेन —अन्नादीनां ब्रह्मत्वे बाधकानां परिहृतत्वात् , साधकसमुदायस्य समुदितत्वादित्यादि प्रकाशप्रसरोक्तम्—परास्तम् । ब्रह्मप्रश्नोत्तरत्वं तु वाक्चक्षुरादिसाधारणमिति न तावन्मात्रेण ब्रह्मत्वसिद्धिर्भवति । एतेन—अन्नादिकं ब्रह्म भवितुमर्हति, ब्रह्मप्रश्नोत्तरत्वेनोक्तत्वादित्यादि प्रकाशप्रसरोक्तम्—अपास्तम् । वाक्चक्षुषोर्व्यभिचारात ॥

SGDF
Sri Gurgeshwari Digital Foundation

वस्तुतस्तु—"अधीहि भगवो ब्रह्मे"ति सद्वारकं ब्रह्मैव पृष्टमिति केवलब्रह्मप्रश्नोत्तरत्वं स्वरूपासिद्धमिति मन्तव्यम्। तदुक्तं खण्डने—राजा गच्छतीत्युक्ते सपरिवारस्य गन्तृत्वप्रतीतिरिव "अधीहि भगवो ब्रह्मे" त्यत्र द्वाररूपपरिकरोपेतस्याध्यापनीयत्वप्रतीत्या कोशोपदेशस्यापि ब्रह्मप्रश्नोत्तरत्वादिति। अत्रच सद्वारब्रह्मप्रश्नोत्तरत्वमेव हेतुत्वेन विवक्षणीयमिति तदिदमस्मन्मतेऽप्यन्नादिषु सन्दिग्धव्यभिचारमिति खण्डनकारा मन्यन्ते। एतेन विवक्षितोक्तप्रयोगे राजाऽसौ गच्छतीत्यादिना जल्पितेन कस्यापि दोषस्यानभिहिततयाऽसम्बंधप्रलापत्वादिति प्रकाशप्रसरोक्तं खण्डनाशयानवबोधविजृंभितमिति—सूचितम्। "अधीहि भगवो ब्रह्मे"ति वाक्ये हि ब्रह्माध्यापनं यत् पृष्टं तदिदमपेक्षितानां सर्वेषामपि प्रश्नमेव गोचरयति। अत एव "तद्विजिज्ञासस्वे"ति विधिविभक्तिश्रवणमुपपद्यते। विधिविभक्तिर्हि सेतिकर्तव्यताकमर्थं विषयीकरोतीति युक्तमिदमधीहि भगवो ब्रह्म त्यत्र सद्वारकब्रह्मण एव प्रश्न इति। "ब्रह्मविदाप्नोति परमि"त्यत्र तु न विदिधातूत्तरं लिङादिविभक्तिश्रवणं, किन्तु कृत्प्रत्ययस्यैवेति केवलब्रह्मज्ञानमेव विषयीक्रियत इति "तदेषाऽभ्युक्ते"ति वाक्यस्य ब्रह्मादिपदार्थमात्रविवरणरूपत्वात् "सत्यं ज्ञानमि"ति वाक्यं केवलब्रह्मस्वरूपमात्रप्रश्नोत्तररूपमेव॥

एतेन—कोशोपदेशस्यापि प्रश्नोत्तरत्वे सत्यज्ञानादिवाक्यस्यापि ब्रह्मप्रश्नोत्तरत्वेनाखण्डार्थत्वसाधनं व्याहतं स्यादिति प्रकाशप्रसरोक्तम्—परास्तम्। अयमाशयः—"अधीहि भगवो ब्रह्मे" त्यनेन सद्वारकब्रह्मप्रश्ने कृते प्रथमतो द्वारप्रश्नोत्तरम् "अन्नं प्राणं चक्षुः श्रोत्रमि"ति दत्तम्। अत एव "तपसा ब्रह्म विजिज्ञासस्वे"त्युक्तज्ञानसाधनोपदेशोऽपि सङ्गतो भवति। अनेन—अन्नादिकं, ब्रह्म न भवितुमर्हति, ब्रह्मप्रश्नोत्तरत्वादित्यनुमानस्य तपसि

SGDF
Sri Gangeshwari Digital Founda

व्यभिचारोऽपि सूचितः। व्यवस्थापितं हि चन्द्रिकायामपि न तपो ब्रह्मेति। तथाच तपसि द्वारप्रश्नोत्तरत्वमेव वर्तते न ब्रह्मप्रश्नोत्तरत्वमित्येव भवताप्यूरीकर्तव्यम्। एवं चान्नादीनामपि द्वारप्रश्नोत्तरत्वमेव वर्तते, नतु ब्रह्मप्रश्नोतरत्वमिति न तद्ब्रह्मत्वम्। एतेन—नह्याप्ततमेन पित्रा देवत्वादेव साक्षादुपदेशेन ब्रह्म ज्ञातुं समर्थेन विनीतेना"धीहि भगवो ब्रह्मे"ति पृष्टेऽन्नादिकमब्रह्मेव ब्रह्मोपदेष्टुं युक्तम्। द्वारमपि हि द्वारत्वेनैपदेष्टव्यम, न सामानाधिकरण्येनेत्यादि प्रकाशप्रसरोक्त-परास्तम्-आप्ततमत्वादेव हि द्वारोपदेशेनोपक्रमः कृतः। नहि देवादीनामपि नान्यथा ग्रहणं विचारं विनैव संभवति। अत एव हि पुनः "तपसा ब्रह्म विजिज्ञासस्वे"ति पूर्वतनविचारावगतं न ब्रह्मेति बोध्यमानमुपपद्यते। अन्यथा—प्राणाख्यरूपान्तरसाक्षात्कारार्थमनुमतिप्रदानादिपरत्वे केवलब्रह्मपदप्रयोगो नोपपद्यते। "तपसा" प्राणं विजिज्ञासस्वे"ति खलु तदाऽपेक्षितं स्यात्। नचैवं श्रूयते। अतो द्वारोपदेश एवायम्। दृष्टो हि सामानाधिकरण्येनापि द्वारोपदेशो मूषानिषिक्तद्रुतताम्रादौ शाखाग्रादौ च॥

यत्तु—शाखासदेशः चंद्र इत्येव परीक्षकाणां व्यवहार इत्यादि प्रकाशप्रसरे उक्तम्, तत्र वयं तदीयं "एवं विधकल्पनायाः सर्वत्र सुलभत्वेनेति वाक्यमेव वरमुत्तरं मन्यामहे। यत्तु पुनः प्रकाशप्रसरे—साक्षात् ब्रह्मज्ञानेच्छापूर्वकप्रश्नोपयोगि सन्देहनिवर्तकनिर्णयजनकवाक्यत्वरूपस्य ब्रह्मप्रश्नोत्तरत्वमित्यनेन विवक्षिततया तस्याब्रह्मभूते कोशेऽसंभवेन ब्रह्मप्रश्नोत्तरत्वस्य ब्रह्मत्वसाधकता निराबाधे"वेति वर्णितम्, तदुक्तब्रह्मप्रश्नोत्तरत्वस्यास्माभिरानन्दवाक्यमात्रविषयत्वस्यैवोरीकरणात् तपसोऽपि साधनत्वावस्थापन्नतयेव ब्रह्मत्वापस्य चानवसरमेव॥

यत्वत्र ब्रह्मपदस्य लक्षणाप्रसङ्गादित्युक्तम्, तदिदं ब्रह्मपदेन

द्वारवाक्येषु जगज्जन्मादिहेतुत्वस्यैव विवक्षणात् अन्नादावपि तल्लक्षणसमन्वयस्यास्माभिरपि वाक्यशेषानुसारेणावान्तरतात्पर्यमनुसृत्य स्वीकारेण चानवकाशमेव। नहि तपःपदस्य निदिध्यासनपदत्वमस्माकमसंमतमिति तस्यानुमानत्वोक्तेरनुचितत्वादित्यादिकमप्रयोजकम्। तथाच निदिध्यासनसाक्षात्कृतस्यैवान्नादिकारणत्वस्य परित्यागेन प्राणादिकारणत्वादिग्रहणादानन्दवाक्यानन्तरं च "तपसा ब्रह्म विजिज्ञासस्वे"त्यनाम्नानेन तदपरित्यागाच्चानन्दब्रह्मतैव पर्यवस्यतीति सिद्धम्। एतेन—"आनन्दो ब्रह्मे"त्यत्राप्येवं वक्तुं शक्यत्वेन तस्याप्यब्रह्मत्वापातादित्यादि प्रकाशप्रसरोक्तम्—परास्तम्। नहि वयमप्यनुमानगम्यं ब्रह्मेति मन्यामहे। तदुक्तं "वेदान्तकुसुमग्रथनार्थत्वात् सूत्राणामि"ति। व्यक्तं चैतत् पूर्वमेव विवेचितम्। नहि ब्रह्मशब्दमात्रेण ब्रह्मता; "तपसा ब्रह्मे"ति ब्रह्मशब्देन तपसोऽपि ब्रह्मताऽऽपत्तेः, कारणान्तरेणाब्रह्मत्वनिर्णयस्तु अन्नादेरपि समान एव। नहि वयं पुच्छस्यापि केवलेन ब्रह्मशब्दमात्रेण ब्रह्मतामूरीकुर्मः, किन्तु "असन्नेवे"त्यादिश्लोकाद्यनुसारेणापीति तु पूर्वमेव विवेचितम्। एतेन—नहि पुच्छस्यापि ब्रह्मत्वे प्रमाणमन्यदस्ति ब्रह्मशब्दादिति प्रकाशप्रसरोक्तम्—परास्तम्। तदिदं सिद्धं "अन्नं ब्रह्मेति व्यजानादि"ति ब्रह्मशब्दस्य कारणपरत्वेनान्नेनापि सामानाधिकरण्यं नानुपपन्नम्। दृष्टं हि "तत्तेज ऐक्षते"त्यादौ कारणोपाधिभूततेजआदावपि कारणत्वव्यपदेशः। अतएव आकाशाधिकरणपूर्वपक्षोत्थितिः। अन्यथौपचारिककारणत्वस्याप्याकाशादावभाव आकाशश्रुत्याऽपि न भूताकाशपरत्वं युक्तं शङ्कितुमिति व्यर्थं तदधिकरणमापद्येत। तदुक्तं खण्डने—"तत्तेजोऽसृजते"त्यादावचेतने तेजआदावुपचारेण जगत्स्रष्टत्वव्यपदेशवदन्नेऽप्युपचारेण निर्देशोपपत्त्या ब्रह्मत्वासिद्धेरिति॥

SGDF
Sri Gangeshwari Digital Found

एतेन—तत्रे "मास्तिस्रो देवताः" इति देवतापदप्रयोगादिना तेजआदिपदस्य लक्ष्यादिचेतनपरत्वेन तन्निदर्शनेनात्राम्नादौ कारणत्वोपचारोक्तेरयुक्तत्वान् इत्यादि प्रकाशप्रसरोक्तम्—अपास्तम्; आकाशवाक्य इवात्र विनाऽपि देवतादिपदं कारणत्वोपचारस्योपपन्नत्वात् ॥

वस्तुतस्तु-"अन्नं ब्रह्म"त्यादौ अन्नोपहितं चैतन्यमेवास्माकं विवक्षितमिति अन्नात् पुरुष इत्यनेनैकवाक्यताऽपि सिद्धा भवतीति न केवलाचिद्विवक्षाऽस्माकमपि संमता। एतेन—अन्नादेर्ब्रह्मणो वा कारणत्वे द्वारत्वाभावेन तथा निर्देशे नियामकाभावात्, अचेतने प्रधानेऽपि कर्तृत्वोपचारसंभवेन जन्मसूत्रोक्तकारणत्वस्य ब्रह्मलक्षणत्वाभावात् इत्यादि प्रकाशप्रसरोक्तं—परास्तम्। नहि प्रधानोपहितचैतन्यं कारणमिति सांख्यानां मतम्। तथाच द्वारतयैवान्नाद्युपदेशः। द्वारताचान्नस्य वरुणेन विदितेति "प्राणो ब्रह्मेति व्यजानादि"त्यादिनाऽर्थसिद्धमेव ॥

एतेन—अन्ने द्वारतया ज्ञातत्वे "नान्नाद्ध्येवेत्येत्र सुत्रचत्वाच्चेत्यादि प्रकाशप्रसरोक्तमपि—परास्तम्; दत्तोत्तरत्वात्। यस्माद "न्नाद्ध्येव खल्विमानि भूतानि जायन्ते, जीवन्ति तदुप्रयन्ति अभिसंविशन्ति च ततोऽन्नं ब्रह्मे ति व्यजानादित्येव मतद्वयसंमतोऽपि वाक्यार्थः। तत्र "तपसा ब्रह्म विजिज्ञासस्वे"ति भृगुवाक्येन हीदं स्पष्टमेव गम्यते, यत् नान्नं ब्रह्म नान्नाद्ध्येव सर्वाणि भूतानीत्यादि भृगुणा सूचितमिति न कथमप्यन्नादिब्रह्मतावादो विकल्पग्रस्त इति, खण्डनोक्तं दूषणं तदवस्थमेव ॥२४॥



SGDF
Sri Gangeshwar Digital Foundation

## [२५] असन्नेवेति श्लोकस्य पुच्छब्रह्मविषयत्वम् ॥

पूर्वमेवेदमुपपादितं यदन्नमयादिश्लोकेषु अन्नादिपदेन न साक्षादन्नमयादेर्ग्रहणम्, किन्तु तत्कारणस्यान्नादेरेव प्रशंसया तत्कार्यत्वेनान्नमयादिप्रशंसा पर्यवस्यतीति। युक्तं चैतत्—कारणस्तुतेः कार्यस्तुतौ पर्यवसानमिति। अत एवा "यो वै शान्ता" इति वेतसशाखाऽत्रकास्तुतिरुपपद्यते। तथाचोक्तप्रायपाठानुग्रह आनन्दमयपर्यायेऽपि तत्कारणशुद्धचैतन्यस्तुतेरेव साक्षाद्विवक्षण एव संभवति, नान्यथेति "ब्रह्म पुच्छं प्रतिष्ठे"ति वाक्यगतपुच्छब्रह्मण एवासन्नेवेति श्लोके ग्रहणं युक्तम्। यत्तु अन्नमयादिपर्यायेषूदाहृतश्लोकानामन्नमयादिमहिमप्रतिपादकत्ववदस्याप्यानन्दमयमहिमप्रतिपादकत्वस्य न्याय्यत्वादिति प्रकाशप्रसर उक्तम्, तत्र यदि साक्षान्महिमप्रतिपादकत्वं तर्हि दृष्टान्तेऽव्यसिद्धिः, परंपरया तु "असन्नेवे"ति श्लोके पुच्छब्रह्मविवक्षायामपि संभवतीति नानेनान्दमयब्रह्मतासाधनं संभवति। यथाचान्नमयादिश्लोकेन नान्नादेरपि ब्रह्मत्वं द्वारतया विवक्ष्यते, पञ्चब्रह्मवादासांगत्यापत्तेस्तथा पूर्वमेव सूचितम्। यथाहि प्रकाशप्रसरकारादिमते आत्मशब्देनान्नमयब्रह्मत्वे ज्ञातेऽपि "अन्नं ब्रह्मे"ति पुनर्ब्रह्मताबोधनं न व्यर्थम्, एवमत्रापि पुच्छस्य ब्रह्मत्वे ज्ञातेऽपि श्लोकेन पुनर्ज्ञापनं न वितथम् ॥

वस्तुतस्तु—श्लोको हि व्याख्यानरूपो न मूलगतऽर्थतया वैयर्थ्यशंकामप्यर्हति; सर्वव्याख्यानवैयर्थ्यापत्तेः। एतेन—पुच्छे श्रुतेन ब्रह्मशब्देन तस्य ब्रह्मतायास्साधितत्वेन श्लोकस्थब्रह्मशब्दाभ्यासस्य ज्ञातज्ञापकत्वेन वैयर्थ्यापातादिति प्रकासप्रसरोक्तम्—अपास्तम्। आधिक्यं पूर्वमेव निरूपितम्। यत्तु प्रकाशप्रसरे—

SGDF
Sri Gangeshwari Digital Foundation

पञ्चरूपस्य ब्रह्मणो जीवान्यत्वानन्यत्वज्ञानिनो सुखदुःखरूपफलप्रतिपादनपरतयाऽस्य श्लोकस्य सप्रमाणं सम्यग् व्याख्यातत्वादित्युक्तम्, तदिदमानन्दमयानन्तरश्लोकस्यानन्दमयमात्रमहिमप्रतिपादकत्वस्यैव प्रायपाठसिद्धत्वेन सर्वविषयकत्वस्यायुक्तत्वान्नोपपन्नम् ॥

एतेन—अन्नमयादीनां पञ्चानामपि जीवान्यत्वेनास्तित्वतदभावज्ञानिनोर्मुक्तिमोरूपफलप्रतिपादनपरत्वादस्य श्लोकस्याऽऽनन्दपदाश्रवणं न दोषायेति प्रकाशप्रसरोक्तमपि—परास्तम्। तस्यहि तच्छ्लोकत्वं यत् श्लोकघटकार्थविशेषोद्देश्यककिंचिद्विधिपरमिति ब्रह्मास्तित्वविधिपरे श्लोके ब्रह्मण एवोद्देश्यत्वात् पुच्छब्रह्मवाक्यश्लोकत्वमेवासन्नेवेति श्लोकस्योरीकर्तव्यम्, नानन्दमयश्लोकत्वम् ॥

अस्तुवाऽऽनन्दमयकारणपुच्छब्रह्मविषयकत्ववदुभयश्लोकत्वमसन्नेवेति वाक्यस्य। सर्वथातु नानन्दमयब्रह्मतावादोऽत्र सिद्ध्यतीत्यधिकमन्यत्र व्यक्तमिति न वयमत्र पिष्टपेषणार्थमेव प्रवर्तामहे। वाङ्मनसागोचरब्रह्मस्वरूपमेवानन्दवाक्य विषय इति प्रचुरानन्दहिरण्यगर्भादीनामपि नानन्दपदेन ग्रहणं संभवति। एतेन—"आनन्दो ब्रह्मेति व्यजानादि"त्यानन्दस्य ब्रह्मत्वे पूर्णानन्दरूपानन्दमयस्य ब्रह्मत्वं कैमुत्यन्यायसिद्धमित्यादि प्रकाशप्रसरोक्तम्—परास्तम्। नह्यानन्दपदेनापरिपूर्णानन्दो विवक्षित इत्यलमनेन क्षुद्रोपद्रवनिरासार्थेनाधिकेन प्रयत्नेनेति खण्डनोक्तं दूषणं तदवस्थमेव। तदयमत्र चन्द्रिकाखण्डनयोरनुवादः—'असन्नेव स भवति' इत्यानन्दमयं प्रत्युदाहृतश्लोकोऽन्नमयादाविवावयवविपरो नतु पुच्छब्रह्मपर इति चन्द्रिका। आनन्दमयं प्रत्युदाहृतश्लोके पुच्छनिर्दिष्टब्रह्मशब्दाभ्यासदर्शनेनास्य श्लोकस्य-पुच्छविषयत्वस्यैव स्वीकर्तव्यत्वात् ब्रह्मशब्दाभ्यासस्य ब्रह्मणि

SGDF
Sri Gargeshwari Digital Foundation

तात्पर्यलिंगत्वादिति खण्डनम्। यथाचात्र ब्रह्मशब्दाभ्यासेऽपि न विज्ञानमयब्रह्मत्वं तथा पूर्वमेव विवेचितमित्यलमतिविस्तरेण ॥

व्यवस्थापितमिदमपि पूर्वमेव यत् पुनरुपसरणान्यथानुपपत्तिरन्नादीनां ब्रह्मत्वं नास्तीति गमयतीति। तदुक्तं खण्डने—ब्रह्माभिन्नतयाऽन्नरूपे ब्रह्मणि ज्ञाते भृगोर्ब्रह्मोपदेशार्थं पुनरुपसत्त्ययोग इति। यत्तु प्रकाशप्रसरे—अन्नाख्यं भगवद्रूपं साक्षात्कृत्य गुरुप्रसादलब्धमपूर्वं धनं निवेदितुं प्राणाख्यंरूपान्तरं साक्षात्कारार्थं मनननिदिध्यासने चिकीर्षुर्गुरोरनुज्ञामादातुं प्रार्थयितुं च पुनरपि वरुणमुपससार, एवं रूपान्तरेणापीत्युक्तम्, तदिदं "अनुजानीहि भगवो प्राणमनुजानीहि भगवो मन इत्येवोपसरणापत्त्याऽधीहि भगवो ब्रह्मेति पुनरुपसरणानुपपत्त्याच नोपपन्नम्। अत्रच "तद्विज्ञाय"पुनरेव वरुणं पितरमिति पुनः शब्दो हि प्रथमिकमुपसरणं यदर्थं तत्फलं न संपन्नमिति स्पष्टमेव गमयति। तथाच पुनः शब्दप्रयोगोऽप्यस्माकमेवानुकूलः ॥

वस्तुतस्तु—"अन्न प्राणं चक्षुः श्रोत्रं मनो वाचमि"ति वाक्येन भृगुणा नान्नप्राणमनोविज्ञानानन्दात्मकपञ्चरूपं ब्रह्मोपदिष्टमिति न विज्ञानानन्दाख्यब्रह्मावेदनानुज्ञाग्रहणप्रसक्तिरपि वर्तते। नहि गुर्वनुपदिष्टार्थविज्ञानार्थं गुरुसविधेऽनुज्ञाग्रहणमुपपद्यते। अन्नं प्राणमित्यत्र षण्णां ब्रह्मत्वमुपदिष्टमन्नं प्राणं चक्षुः श्रोत्रं मनो वाचामि"ति,तदिहापि विज्ञानानन्दयोर्विज्ञानानुज्ञाग्रहणं कथमिव प्रसज्यते? तथाच यतो वेति लक्षणलक्षितं यत् यत् भवति तत्सर्वं समालोच्यतामित्येव गुरोराशयोऽवगम्यत इति गुरूपदिष्टक्रमपरित्यागेनापि तपसा विज्ञानादिसमालोचनमपि नास्माकमनुपपन्नम्; अन्नं प्राणमित्यादेरुपलक्षणत्वात्। एतेन—स चैवमुपदिष्टाष्टरूपो युगपत् सर्वस्य साक्षात्कर्तुमशक्यत्वादिति प्रकाशप्रसरोक्तम्—अपास्तम्। नहि अन्नं प्राणमित्यत्राष्ट-

SGDF

रूपमुपदिष्टम् । षड्रूपमेव खलु निर्दिश्यते । अस्तु विज्ञानानन्दयोरप्युपलक्षणेनाष्टरूपस्यैवोपदेश इति, एवमपि—कथं तृतीयं विज्ञानमेव ज्ञातुं प्रवृत्तं कथं न चक्षुरिति प्रश्नोऽसमाधेय एव । तस्यापि कथं चिदुपपत्तौ तु कथमानन्दज्ञानानन्तरमप्यवशिष्टरूपान्तरज्ञानार्थमनुमतिर्न वरुणेन याचितेति सैषा भार्गवी वारुणी विद्येति पंचरूपब्रह्मणैव पर्यवसानं कथमुपपद्यते ? एतेन— पंचत्वसंख्यासाम्यादन्नादिशब्दैरन्नमयादिग्रहणमित्यपि—प्रत्युक्तम् ; भृगुवल्ल्यां भवदुक्तरीत्याऽष्टरूपस्यैव ब्रह्मणो विषयत्वेन पंचरूपस्य ब्रह्मणोऽविषयत्वात् ॥

यत्तु प्रकाशप्रसरे—अनुजानीहीति वक्तव्ये यदधीहीति वदति, तदहंकारनिरासार्थम् , विनयातिशयादेवेति वर्णितम् , तदिदनुजानीहि भगव इत्युपादानेनापि विनयातिशयप्रकाशनस्य सिद्धत्वादकिंचित्करम् । 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मे"ति याऽनुपूर्वी प्रथमं वर्तते,सैवानुपूर्वी; पुनरपि श्रूयमाणा न कथमप्यर्थान्तरपरोरीकर्तुं शक्या । तथाच न कथमपि पुनरुपसरणमन्यथोपपद्यते ॥

परमार्थतस्तु—भवन्मते "यतो वे"ति वाक्येन लक्षणचतुष्टयस्यैव विवक्षणात्, "सत्यं ज्ञानमि"त्यत्रैवानन्दमयान्तसाधारणलक्षणाविवक्षणात् पंचरूपस्याष्टरूपस्य वा ब्रह्मणो नात्र गृहणं संभवतीत्यन्नादिपदं न ब्रह्मपरम्, किन्तु द्वारपरमित्येवोरीकर्तव्यम् । लक्षणाष्टकस्याप्यत्र विवक्षणेऽपि चान्नमयादिषु सर्वत्र सर्वलक्षणाभावस्य व्यवस्थया लक्षणविशेषवत्त्वस्यैव विवक्षणस्य च प्रकाशप्रसरादिषूपपादितत्वेन—"अन्नाद्धेव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्ती"ति अन्नादिषु सर्वत्र सर्वलक्षणान्वयप्रतिपादनमन्नमयादिविभिन्नत्वमन्नादेः स्पष्टमेव गमयतीति नान्नादिपंचरूपब्रह्मवादोऽत्र विवक्षितुं

SGDF Sri Gurgeshwara Digital Foundation

शक्यः। अस्मन्मतेतु अन्नाद्युपहिते सर्वत्र सर्वलक्षणसंबंधस्य विवक्षितत्वात् प्रतिपर्यायं "यतो वे"ति सर्वलक्षणसमन्वय उपपन्न एव। एतेन—यतो वेति ब्रह्मलक्षणयोगादन्नादिब्रह्मतापक्ष एव युक्त इति प्रकाशप्रसरोक्तम्—परास्तम् ॥

तपसैवापरोक्षितत्वमपि नास्माकं प्रतिकूलम्, अस्माभिरपि अन्नोपहितब्रह्मणः तपसैवापरोक्षितत्वोरीकारात्। एतेन—तपसैवाऽपरोक्षितत्वलिङ्गाच्चोत्तरपक्षावधारणोपपत्तेरिति प्रकाशप्रसरोक्तम्—प्रत्युक्तम्। यत्तु पुनः प्रकाशप्रसरे—नहि जातु देहादाविदं लक्षणं संभवति; नवा तस्य स्वभावसिद्धज्ञानस्य तपोऽपेक्षितम्। तपश्चात्र निदिध्यासनमेवेति पूर्वमेवोक्तम्" इत्यादि वर्णितम्, तदिदमनुक्तोपालंभनमेव। नहि वयमत्रान्नादिपदेन देहादिकं स्वीकुर्मः। एतेन—ब्रह्मज्ञापकेषु श्रुतेषु अश्रुतमब्रह्मत्वं कल्पयतां श्रुतहानरश्रुतकल्पना च स्यादिति प्रकाशप्रसरोक्तमपि—निरस्तम्। नह्यन्नादिब्रह्मत्वज्ञापकं किमपि लिङ्गमत्र वर्तते, इति पुनरुपसरणाद्यगादित्यलमतिविस्तरेण ॥

यदत्र सूत्राक्षराणामनानुगुण्यमद्वैतमते स्वयमेव स्वीकृतम्, यो हि स्वयमेव स्वकृतव्याख्यानस्यास्वारसिकत्वं मन्यते, तं प्रति तस्य व्युत्पादनं मृतमारणमिव निराकर्तुरेव लज्जाकरमिति प्रकाशप्रसर उक्तम्, तत्रेदमेवास्माकं वक्तव्यम्—यदश्रुतसूत्रव्याख्यानरीतयः प्रकाशप्रसरकारादय इति। शबरस्वामिनो हि—"लोके येष्वर्थेषु यानि पदानि श्रूयन्ते, सति संभवे सूत्रेष्वपि तदर्थान्येव युक्तम्, नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वे"ति सति संभव एव नाध्याहारादिकमसंभवे तु नानध्याहार इत्येव गमयन्ति। अत्रच संभवे सतीत्यनेन कोवाऽर्थो विवक्षित इति तु कुमारिलपादैः परिसंख्यापक्षाङ्गीकारेणैवं व्याख्यातम्—"वैदिकं जैमिनीयं च यत्र वाक्यं विरुध्यते। यथा श्रुतगृः-

हीतार्थं तत्रेद मुपदिश्यते । अध्याहारादिभिः सूत्रं वैदिकं
यथाश्रुतम् । नेयम् , विरोधेऽन्योन्यस्य वैदिकानां भवन्तु
तेन वेदाविरुद्धस्य सति संभव इत्ययम् । विधीयतेऽर्थः, शे
यथाप्राप्तमनूद्यते ॥" इति । तत्र हि न्यायरत्नाकरे—'सूत्राणि वे
र्थज्ञानोपायत्वात् प्रथमोपनिपातीन्यसंजातविरोधित्वाद्यथाश्
तानि गृहीत्वा तद्वशेन चोदनामेव न्याय्यमबाध्यां बाधेतेत्य
स्तन्निवृत्तयेऽर्थवत्येव परिसाख्ये"ति यदुक्तं तदपि व्याख्यानस्
स्यापि सूत्रस्य न वेदबाधकत्वमिति निरूपयतीति वेदविर
सूत्राण्यन्यथा नेयानीति भामतीकाराः नास्वारस्यं स्वव्याख्य
स्य मन्यन्ते,अध्याहारादिभिरपि सूत्रव्याख्यानं हि बहुषु स्थलेषु
म् । तदुक्तं वार्तिके—शेषभाजां भवेल्लोप इध्याहारकल्पना । वि
कर्षात् पशोश्चेति विभक्तिः परिणम्यते । पदेन व्यवधानं तु ल
सन्नियमादिति । सूत्रेण व्यवधानं तु पानव्यापदि कल्पित
पशुसामान्यविध्यादौ सूत्रमेवाऽन्यथा कृतमि"त्यादि ॥इति। तथ
सूत्राक्षरानानुगुण्यं न स्वसंमतास्वारस्यसूचकमिति न किमप
द्यमद्वैतमत इति खण्डनोक्तं दूषणं भवतामपरिहरणीयमेव ॥२

## [२८] आनन्दमयसूत्रास्वारस्यम् ॥

एतावता प्रपञ्चेनान्नादिब्रह्मपंचरूपतावादो न संभवदुचि
इति निरूपितम् । इदानीमानन्दमयोऽभ्यासादिति सूत्रस्वार
मपि पुच्छब्रह्मवाद एव नान्नमयादिब्रह्मवाद इति निरूपणम
सरप्राप्तम् । तत्रेमतत्त्ववादिनो मन्यन्ते—सूत्रे चानन्दमयपदम
मयादिपंचोपलक्षकम् । आनन्दमये पुच्छत्वोक्तया जिज्ञास्यत्
संभवतीति पूर्वपक्षसूचनार्थं प्राथमिकमन्नमयं परित्यज्याऽनन्
यनिर्देशः—इति ॥

SGDI
Sri Gargeshwari Digital Foundation

तत्रेदं विचारणीयम्—यथाऽनन्दमस्य ब्रह्मण एव पुच्छत्वेन समस्तस्यावयविनः आनन्दमयस्याब्रह्मत्वप्राप्तिरेवमन्नमयस्यापि सावयवस्य कथमब्रह्मत्वं न प्राप्तम्। साऽपि हि पुच्छवानेव। आनन्दमये स्वस्यैव पुच्छत्वमन्नमयादौ तु स्वभिन्नस्येति कल्पनं तु भवतां न सङ्गतं भवति; अन्नमयादावपि तस्यैवानन्दमय इव इदंपदेनग्रहणं कथं न भवतां संभवति? "सशिर" इत्यादिश्रुत्या- "अङ्गाङ्गित्वे"नेति स्मृत्या चान्नमयादावपि हि तस्यैव पुच्छत्वमवश्यमेवाङ्गीकर्तव्यम्। अन्यथाऽन्नमयादौ स्वभिन्नस्य पुच्छत्वे आनन्दमये परं स्वस्यैव पुच्छत्वमिति कथं वा न प्रायपाठविरोधो भवतां समापतति? ब्रह्मपुच्छमित्यत्र मुख्यप्राण एव भवतां ब्रह्मपदार्थो नानन्दमयो नारायण इति पक्षान्तरे तु स्वस्यैव पुच्छत्वमिति सिद्धान्तस्यैवाभावात् पुच्छत्वोक्त्याऽऽनन्दमयस्याजिज्ञास्यत्वशंकाया एवाभावादानन्दमयस्यैव सूत्रणे न किमपि निमित्तं वर्णयितुं शक्यम्। तथाचान्नमयेऽपि पुच्छोक्त्या जिज्ञास्यत्वं न संभवतीति पूर्वपक्षस्य समानत्वात् अन्नमयपरित्यागेनाऽनन्दमयपदप्रयोगो भवतामत्यन्तमेव विरोधी॥

अयमत्र निष्कर्षः—अन्नमयादाविदंपृथिव्यादेरपि अन्नमयाभिन्नमेव पुच्छादिकं भवतां विवक्षितं वा नवा। आद्ये अन्नमयादानन्दमयस्य न विशेषः, द्वितीये तस्यैव तदवयवत्वं बाधितम्। परिमितशक्तित्वं तु अवयवी, नावयवः;अवयवित्वात्, इत्यनुमानेऽन्नमयादिषु साध्याव्यापकत्वान्नोपाधिरिति भवदीयसिद्धान्तानुपपत्तिः। तथाच स्वभिन्नावयवत्वेऽप्यन्नमयस्येवानन्दमयस्यापि ब्रह्मपदेनार्थान्तरविवक्षयैव ब्रह्मत्वसमर्थनसंभवे स्वस्यैव स्वावयवत्वाश्रयणपक्ष एव व्यर्थोऽधिकाशंकाप्रयोजकश्चानुपपन्न एव। एतेन—अन्नमयादीनां पंचानामप्यब्रह्मत्वे विकारशब्दः साधारणोपपत्तिः, आनन्दमयेतु ब्रह्मणः पुच्छत्वोक्त्या समस्त-

स्यावयविन आनन्दमयस्याब्रह्मत्वप्राप्तिरित्याधिकऽनुपपत्तिरि-
त्यत्रावहितैर्भवितव्यमिति ज्ञापयितुमानन्दमयपदग्रहणमिति
प्रकाशप्रसरोक्तमुकरीत्याऽऽनन्दमयादावप्युक्ताशंकायाः सर्वे-
नासाधारण्याभावात्—अपास्तम् ॥

अस्तु वा कथमप्यानन्दमय उक्तविधाऽधिकाशंका, एवमन्नम
येऽपि अन्नात्पुरूष इति जन्यत्वोक्तिरधिकाऽनुपपत्तिर्वर्तत इति कथ
नान्नमयस्य प्राथमिकस्य परित्यागः? तदुक्तं खण्डने—अन्नमये
"अन्नात्पुरुषः" इति जन्मोक्त्या न जिज्ञास्यत्वमिति पूर्वपक्षोत्थान
संभवात् तत्सूचनाय प्रथमातिक्रमस्यानुपपत्तेरिति । यद्त्र प्रका
शप्रसरे—जन्मनोऽपि विकारोपपादकत्वेन तदन्तर्भावादित्युक्तम्
तदिदं आनन्दमयस्य पुच्छाद्यवयवस्त्ररूपावयवित्वस्यापि विका
रोपपादकत्वेन पुच्छत्वोक्तेरपि विकार एवान्तर्भावात् समान
मिति नान्नमयादानन्दमयस्य कोऽपि विशेषः । यत्तु पुनः प्रकाश
प्रसरे—आप्तकामस्य ब्रह्मणः सृष्टयादिरयुक्त इति न शंक्यम
आनन्दोद्रेकादेव मत्तस्य नृत्तगानवदुपपत्तेरिति वक्तुं पूर्वसङ्ग
त्वादानन्दमयपदमिति वर्णितम्, तदिदं मत्तस्यापि नृत्यगानादि
नाऽऽनन्दोद्रेकस्यैवानुभूयमानत्वात्, आनन्दमयत्वेनाप्तकामत्वस्यै
सूचनेनोक्तशंकाया एव व्यवस्थापनेन परिहारासूचनेन पूर्वसू
सङ्गत्यसंभवान्नोपपन्नम् । नह्याप्तकामो भगवानुन्मत्तसदृश
नहि धर्माधर्मापेक्षं स्रष्टत्वम् "वैषम्यनैर्घृण्ये न सापेक्षत्वा
थाहि दर्शनमि" ति सूत्रव्यवस्थापितमुन्मत्तसदृशत्वे भगवत उ
पद्यते । नह्युन्मत्तप्रसादोऽस्माकं श्रेयस्कर इत्येव वा तत्कोपो
श्रेयस्कर एवेतिवा कोऽपि नियम इति सत्यं प्रकाशितं स्वी
मुन्मत्तत्वं भगवत्यपीति नात्राधिकं किमपि वक्तुमिच्छामः ॥

वस्तुतस्तु—देशमात्रापरिच्छिन्नत्वरूपमनन्तत्वं लक्षणवाक
स्यानन्तपदार्थं इत्युक्तम्, तत् कुतः प्रमाणादवगन्तव्यमित

पूर्णानन्दत्वेन हेतुनेति भावेनाह—"तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मा आनन्दमयः" इति। ततश्चानन्तत्वमानन्दमयप्रकरणे निर्णीतमिति प्रकाशप्रसर एवोक्तमिति आनन्दमयपदेन स्रष्टृत्वसमर्थनमत्र क्रियत इति विवरणं पूर्वोत्तरविरुद्धमेव। स्रष्टृत्वं हि सत्यपदार्थः आकाशादिसृष्टिप्रकरणे विवृतमित्यपि हि प्रकाशप्रसरकारा एव विवेचयन्तीति अन्नमयात्पूर्वतनस्यैव सृष्टिप्रकरणस्य कथं सृष्टिरिति शंकानिवारणार्थमत्र सूत्रकृता निर्देशः करणीयः स्यादित्युक्तशंकानिरासार्थमानन्दमयपर्यायग्रहणमिति रिक्तमिदं वचः॥

यथाचान्नमयनिर्देशेनापि पूर्वोत्तरसङ्गत्यादिकं संभवति, तथाऽन्यत्र व्यक्तम्, नतु सङ्गतिसूचनार्थं यस्य कस्यापि पदस्य सूत्रे निर्देशो युक्तः॥ अयं हि पादो नोपासनापादः, किन्तु अन्यत्र प्रसिद्धानां ब्रह्मणि समन्वयपाद इति खलु भवतामपि मतम्। तथाचान्नमयप्राणमयादीनां सर्वेषामपि ब्रह्मणि समन्वयस्यैवात्र विवक्षितत्वात्—सर्वापेक्षितानन्दप्रदोपासनाविषयपूर्णानन्दत्वरूपमहागुणस्य प्रथमं वाच्यत्वादानन्दमयस्य मुखतो ग्रहणमिति प्रकाशप्रसरोक्तमनवसरमेव। नह्यत्र गुणादिवाच्यत्वमपेक्षितम्, किन्तु ब्रह्मवाच्यत्वमेवेति सर्वविदितमिदम्। यथाचानन्दमयपदार्थाविवक्षायामपि पूर्वोत्तरसूत्रसङ्गतिस्तथा व्यक्तमाकरे॥

एतेन—अभ्यासहेतुरपि—व्याख्यातः। नहि "येऽन्नं ब्रह्मोपासते" इत्यादौ ब्रह्माभ्यासो वरीवर्ति। सकृदेव हि तत्र ब्रह्मशब्द अम्नायते। तदुक्तं खण्डने—तत्र ब्रह्मशब्दस्य द्विःश्रवणाभावादिति। विज्ञानमयश्लोकादिष्वपिहि विज्ञानाद्युपसर्जनमेव ब्रह्माम्नायते, न स्वप्रधानतयेति, स्वप्रधानतया ब्रह्मशब्दाम्नानवदसन्नेवेतिश्लोकघटकब्रह्मशब्दाभ्यास एवात्राभ्यासपदार्थः। नचान्नमयादि ब्रह्मतासाधकत्वमुक्ताभ्यासस्य संभवतीत्येव खण्ड-

नाशयः । तथाच सौत्राभ्यासहेतुपर्यालोचनेनाप्यन्नमयादयो न ब्रह्मेत्येव गम्यते ॥

यत्तु चन्द्रिकायां—अन्नमयादिषु ब्रह्मशब्दः श्रुतः;तथापि तावन्मात्रेण तेषां ब्रह्मतेत्युक्तम्,तदिदं पूर्वमेवान्नमयाद्यब्रह्मत्वस्य साधितत्वात् ब्रह्मशब्दमात्रेण तपस इव ब्रह्मत्वायोगाच्चानुपपन्नमेव । अधिकमत्रोपपादनीयं सर्वं पूर्वमेव तत्र तत्र विवेचितमिति न पिष्टपेषणार्थं वयमत्र प्रवर्तामह इति जन्माधिकरणमारभ्यानन्दमयाधिकरणपर्यन्तमद्वैतमते न केवलं परोक्तानां दूषणानामवसरः,किन्तु तन्मते खण्डनोक्तानि सर्वाण्यपि दूषणान्यपरिहरणीयानीति सर्वं खण्डनोक्तमनघमिति शिवम् ॥

इति

महामहोपाध्यायश्रीयुक्तपंचापगेशशास्त्रिपादान्तेवासिनः

वेदान्तविशारदश्रीयुक्तानन्तकृष्णशास्त्रिणः

कृतिष्वद्वैतदीपिकायामानन्दमयाधिकरणं

समाप्तम् ॥

॥ समाप्तो द्वितीयो भागः ॥

S181.48
S

SGDF
Sri Gurgeshwari Digital Foundation